अत्र विरुद्धमित्युक्तेर्गृहस्थः क्षेत्रधान्यमुत्पाटयतीत्यत्र नासंगतिः ॥ ८४ ॥ अ-न्यत्रेति ॥ अन्यत्र करणीयस्यार्थस्य ततोऽन्यत्र तस्मादन्यस्थले कृतिः करणं साऽसंगतिः। अन्यत् क्रियमाणभिन्नं वस्तु कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिः तस्मा-

विषं जलधरैः पीतं मूर्छिताः पथिकांगनाः ॥ ८४ ॥

अन्यत्र करणीयस्य ततोऽन्यत्र कृतिश्च सा ॥

द्विरुद्धार्थस्य करणं च तथा असंगतिरित्यपरो भेदः। अत्रैकस्मिन् श्लोके प्रक्रम-भंगमनादृत्य भेदद्वयं लक्षितं उत्तरश्लोके च तदुदाहृतं परं तु प्रथमभेदोदाहर-णानंतरं द्वितीयभेदस्य लक्षणोदाहरणे क्रमेण वक्तुं युक्ते अविलंबेनार्थबोधे च-

१ ययोः कार्यहेत्वोर्भिन्नदेशत्वं विरुद्धं तयोस्तन्निबध्यमानमसंगत्यलंकारः। यथात्र विषपानमूर्छयोर्भिन्नदेशत्वम् । अहो खलभुजंगस्य विपरीतो वधक्रमः । अन्यस्य दशति श्रोत्रमन्यः प्राणैर्वियुज्यते ॥ उपकारिमुखेंदुस्थमन्यदेव [illegible]मृतम् । कचित्स्रवति कस्यापि जायते जीवितोदयः ॥

णम् । तस्मै नमः अस्तु । येन राहुवधूकुचौ मुधा कृता मिथ्या कृता । राहुशरीरनाशनेन भोगरहितौ कृतावित्यर्थः । एतेन कृष्णाय नमस्कारो गम्यते । राहुशरीरच्छेत्ता हि स एवेति लक्षणानुगमः ॥ ६७ ॥ पर्यायेति ॥ व्याजेन कपटेन परस्य स्वस्य वा यदिष्टसाधनं तदपि पर्यायोक्तमाहुः । तत्रापि प्रकारांतरकल्पनासत्त्वात् । उदाहरणम् । अहं चूतलतां द्रष्टुं पुष्पिता न वेति निश्चेतुं यामि । युवभ्यां स्त्रीपुंसाभ्यामिह

पर्यायोक्तं तदप्याहुर्यद्व्याजेनेष्टसाधनम् ॥
यामि[2] चूतलतां द्रष्टुं युवाभ्यामास्यतामिह ॥ ६८ ॥

[1] रमणीयेन व्याजेन मिषेण स्वस्य परस्य वा इष्टस्य यत्साधनं संपादनं तदपि पर्यायोक्तम् ॥ [2] अत्र नायिकां नायकेन संगमय्य चूतलतादर्शनव्याजेन निर्गच्छंत्या सख्या तत्स्वाच्छंद्यसंपादनरूपेष्टसाधनं पर्यायोक्तम् । देहि मत्कंदुकं राधे परिधाननिगूहितम् । इति विस्रंसयन्नीवीं तस्याः कृष्णो मुदेऽस्तु वः ॥ पूर्वत्र परेष्टसाधनमत्र कंदुकशोधनार्थं नीवीविस्रंसनव्याजेनेष्टसाधनमिति भेदः । ( [1] परिधानेनाधरवस्त्रेण निगूहितमाच्छादितमित्यर्थः । )

आस्यतां स्थीयताम्। रहः संपादनाय दूत्याः कपटोक्तिरियमिति लक्षणानुगमः ॥ ६८ ॥ उक्तिरिति ॥ निंदास्तुतिभ्यां निबद्धाभ्यां स्तुतिनिंदयोर्गम्यमानयो-

उक्तिर्व्याजस्तुतिर्निंदास्तुतिभ्यां स्तुनिनिंदयोः ॥

कः[2] स्वर्धुनि विवेकस्ते नयसे पापिनो दिवम् ॥ ६९ ॥

रुक्तिर्व्याजस्तुतिः[1] व्युत्पत्तिः स्पष्टा। उदाहरणम्। हे स्वर्धुनि गंगे। वाहिनी तटिनी धुनीति शाश्वतः। ते तव को विवेकः। यत् पापिनो दिवं नयसे। अत्र गं-

१ निंदया स्तुतेः स्तुत्या निंदाया वा अवगगमनं व्याजस्तुतिः। २ कस्ते शौर्यमदो योद्धुं त्वय्येकं सप्तिमास्थिते। सप्तसप्तिसभारूढा भवंति परिपंथिनः ॥ अर्धं दानववैरिणा गिरिजयाप्यर्धं शिवस्याहृतं देवेत्थं जगतीतले स्मरहराभावे समुन्मीलति। गंगा सागरमंबरं शशिकला नागाधिपः क्ष्मातलं सर्वज्ञत्वमधीश्वरत्वमगमत्त्वां मां च भिक्षाटनम् ॥ अत्राद्योदाहणे सप्तसप्तिगतश्लेषमूलनिंदाव्याजेन स्तुतिर्गम्यते द्वितीयोदाहरणे सर्वज्ञः सर्वेश्वरोऽसीति राज्ञः स्तुत्या व्याजरूपया मत्पीयदैन्याद्यादि दारिद्र्यादि सर्वं जातम्।

गाया निंदाव्याजे [illegible] साध्विर्ति ॥ हे दूति साधु सम्यक् अतः परं किं साधु पुनः कर्तव्यम्। यद्यस्मान्मदर्थे। निमित्ते सप्तमी। दंतैर्नखैश्च विलूनासि। अपिशब्दद्वयं समप्राधान्यसूचनार्थम्। अत्र कामिनीकृतस्तुतिव्या-

साधु दूति पुनः साधु कर्तव्यं किमतः परम् ॥
यन्मदर्थे विलूनासि दंतैरपि नखैरपि ॥ ७० ॥
निंदाया निंदया व्यक्तिर्व्याजनिंदेति गीयते ॥

जेन तत्पतिसक्तत्वद्योतनेन निंदा गम्यते ॥ ७० ॥ निंदाया इति ॥ निंदया निंदायाः व्यक्तिः सूचना व्याजनिंदा इति गीयते। उदाहरणम्। हे विधे हे ब्र-ह्मन् स शिवो निंद्यः। अत्र पर्यायोक्तेन शिवो गृह्यते। यः शिवः ते तव प्राक्

१ साधु दूतीत्युदाहरणे मदर्थे महांतं क्लेशमनुभूतवत्यसीति व्याजरूपया निंदया तात्किंतु रंतुमेव गतासि धिक्त्वां दूतिकाधर्मविरुद्धकारिणीमिति निंदावगम्यते।

पूर्वमेकमेव पंचमं शिरो अहरत्। सर्वाण्यपि नाहरदित्येवकारार्थेन हरनिंदया दुःखमयप्रपंचकर्तृत्वेन स्रष्टुर्निंदा गम्यते ॥ ७१ ॥ आक्षेप इति ॥ स्वयमुक्त-

विधि स निंद्यो यस्ते प्रागेकमेवाहरच्छिरः ॥ ७१ ॥
आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात् ॥
चंद्र संदर्शयात्मानमथवास्ति प्रियामुखम् ॥ ७२ ॥

स्यार्थस्य विचारणात् स्वयमेव प्रतिषेध आक्षेपः स्पष्टम्। उदाहरणम्। हे चंद्र आत्मानं संदर्शयाऽथवा प्रियामुखमस्त्येव। आल्हादकत्वेन मुखमेव चंद्रकार्य-

१ विधिरेव विशेषगर्हणीयः करट त्वं रट कस्तवापराधः। सहकारतरौ चकार यस्ते सहवासं सरलेन कोकिलेन ॥ अत्र हरनिंदया विषमविपाकं संसारं प्रवर्तयतो विधेरभिव्यंग्या निंदा व्याजनिंदा। शिखरिणि क नु नाम कियच्चिरं किमभिधान-मसावकरोत्तपः। तरुणि येन तवाधरपाटलं दशति बिंबफलं शुकशावकः ॥ शिखरिणीति नायिकां प्रति नायकस्योक्तिः हे तरुणि असौ शुकबालकः नाम वितर्के कनु कस्मिन्शिखरिणि पर्वते कियत्कालं चिरं किमभिधानं किंनामकं तपः अ-करोद्येन हेतुना तवाधरवत्पाटलं रक्तवर्णं बिंबफलं दशतीत्यन्वयः ॥ अत्र शुकशावकस्तुत्या नायिकाधरसौभाग्यातिशय-स्तुतिर्व्यज्यते।

करोति चंद्रा[illegible] निषेधति ॥ केचन बुधाः पंडिताः नि-
षेधाभासं निषेधवद्भासमानं वचः आक्षेपं आक्षेपालंकारं मन्वते । उदाहरणम् ।
अहं दूती न मिथ्यावादिनी नेत्यर्थः । तस्यास्तनोः शरीरस्य कालानलोपमः क-

निषेधाभासमाक्षेपं बुधाः केचन मन्वते ॥
नाहं दूती तनोस्तापस्तस्याः कालानलोपमः ॥ ७३ ॥
आक्षेपोऽन्यो विधौ व्यक्ते निषेधे च तिरोहिते ॥

ल्पांताग्निसमः अतिदाहक इत्यर्थः । तापः कामज्वरो वर्तते । तस्मात्सा नोपेक्ष्येति
भावः । नायकं प्रति दूतीवचनमिदम् । अत्र नाहं दूतीति निषेधस्य मिथ्यावा-
दित्वे पर्यवसानादाभासत्वम् ॥ ७३ ॥ आक्षेप इति ॥ विधौ व्यक्ते प्रकटे सति

१ केचिदलकारसर्वस्वकारादय इत्थमाहुः—न निषेधमात्रमाक्षेपः किं तु यो निषेधो बाधितः सन्नर्थांतरपर्यवसितः किंचिद्विशेषमाक्षिपति स आक्षेपः इति ।

निषेधे च तिरोहिते सति गूढे सति अन्यः प्रागुक्तभिन्नः आक्षेपः स्यात्। विधिः कर्तव्योपदेशः निषेधस्तु तद्विपरीतः। उदाहरणम्। हे कांत गच्छसि चेत् गच्छ। कामचारानुज्ञायां लोट्। मम जनिर्जन्म तत्रैव तस्मिन्नेव देशे स्यात् भवेत्। संभावनायां लिङ्। अंते या मतिः सागतिरिति न्यायेन त्वद्विरहाक्षमाया मम

गच्छ गच्छसि चेत्कांत तत्रैव स्याज्जनिर्मम[1] ॥ ७४ ॥

आभासत्वे विरोधस्य विरोधाभास[2] इष्यते ॥

विरहजन्यमरणानंतरं त्वत्समागमयोग्ये देशे जन्म भविष्यतीत्यर्थः। मज्जीवनमिच्छसि चेत् मागच्छेति निषेधो गूढः॥७४॥ आभासत्वे इति॥ विरोधस्य आभासत्वे सति विरोधाभासो नामालंकार इष्यते। अस्माभिरिति शेषः। अ-

---

१ न चिरं मम तापाय तव यात्रा भविष्यति। यदि यास्यसि यातव्यमलमाशंकयापि ते॥ अत्रापि न चिरं मम तापायेति स्वमरणसंसूचनेन गमननिषेधो गर्भीकृतः।  २ आभासत इत्याभासः विरोधश्चासावाभासश्चेति व्युत्पत्तेः।

न्यस्तु विरोध इति । उदाहरण…

दिना विनापि हारिणौ हारवंताविति विरोधः । हरतश्चित्तमिति व्युत्पत्त्यार्थांतरकल्पनेन तत्परिहारादाभासत्वम् । इदमुदाहरणं श्लेषसंकीर्णं प्रकारांतरेणापि काव्यादर्शे दृश्यते । काव्यप्रकाशे तु जात्यादिभेदाद्दशविधोऽयम् । वस्तुतस्तु

विनापि तन्वि हारेण वक्षोजौ तव हारिणौ ॥ ७५ ॥

विभावना विनापि स्यात्कारणं कार्यजन्म चेत् ॥

श्लेषमूलश्चमत्कारकारीति स एवात्रोक्तः ॥ ७५ ॥ विभावनेति ॥ कारणं प्रसिद्धकारणोक्तिं विनेत्यर्थः । कार्यजन्म कार्योत्पत्तिरभिधीयते चेत्तर्हि विभावनालंकारः स्यात् । विभाव्यते विचार्यते कारणमस्यामिति व्युत्पत्तेः । बाहुलकादधि-

---

१ अत्र हाररहिताबपि हारिणौ हृद्याविति श्लेषमूलको विरोधाभासः । २ विभाव्यते कारणांतरं यस्यामिति व्युत्पत्तेः । कारणाभावश्च ।

करणे युच् । उदाहरणम् । त्वच्चरणद्वयं लाक्षारसासिक्तमप्यलक्तकाच्छुरितमपि पाठांतरे लाक्षारसेनासमंतात्सिक्तं न भवतीति रक्तमस्ति । स्वभावादेवेति भावः। पूर्वत्र विरोधोक्त्या चमत्कारः । इह तु कारणांतरोक्त्या चमत्कार इति भेदः ।

अपि लाक्षारसासिक्तं रक्तं त्वच्चरणद्वयम् ॥ ७८ ॥
हेतूनामसमग्रत्वे कार्योत्पत्तिश्च सा मता ॥

अत्र श्लेषमूलत्वं नास्तीत्यपरो विशेषः ॥ ७८ ॥ हेतूनामिति ॥ किं च हेतूनां कारणानामसमग्रत्वे अपुष्कलत्वे सत्यपि कार्योत्पत्तिः तद्वर्णनमित्यर्थः। सा विभावना मता । उदाहरणम् । मन्मथः कामः अतीक्ष्णकठिनैः तीक्ष्णानि खड्गा-

१ अत्र लाक्षारसासेकरूपकारणाभावेऽपि रक्तिमा कथितः । स्वाभाविकत्वेन विरोधपरिहारः। यथा वा—अपीतक्षीबकादंबमसंमृष्टामलांबरम् । अप्रसादितशुद्धांबु जगदासीन्मनोहरम् ॥ शरद्वर्णनमेतत् । अपीतेति । अपीताः पानशून्याः क्षीबा मत्ताः कादंबाः कलहंसा यत्र तथा असंमृष्टं संमार्जनशून्यममलमंबरमाकाशं यत्रैवमप्रसादितं वस्त्रगा[illegible]कक्षोद्प्रक्षेपादिना, यत्प्रसादनं तच्छून्यं सूक्ष्मं लव्वंबु यत्रैवंभूतं जगन्मनोहरमासीदित्यन्वयः ।

तिन्नीलतां नेत्रमहसा नीलतमत्वं दधते । अत्र कर्णोत्पलानां परसांनिध्यात् स्वतःसिद्धगुणोत्कर्षो वर्णितः । समाध्यलंकारे च परसांनिध्यात् झटिति कार्यो-

मीलितं यदि सादृश्याद्भेद एव न लक्ष्यते ॥
रसो[2] नालक्षि लाक्षायाश्चरणे सहजारुणे ॥ १४५ ॥

त्पत्तिरिति ततो भेदः ॥१४४॥ मीलितमिति ॥ यदि सादृश्याद्वस्तुद्वयस्य भेदो द्वित्वमेव न लक्ष्यते तर्हि मीलितम् । नपुंसके भावे क्तः । उदाहरणम् । सहजारुणे चरणे पादतले लाक्षाया रसो यावको नालक्षि भिन्नतया न ज्ञातः ॥ १४५ ॥

---

१ लिंगमशिष्यं लिंगस्य लोकाश्रयत्वादिति शेखरे । २ मल्लिका माल्यभारिण्यः सर्वांगीणार्धचंदनाः । क्षौमवत्यो न लक्ष्यंते ज्योत्स्नायामभिसारिकाः ॥ अत्रोदाहरणे चंद्रिकाभिसारिकानां धवलिमगुणसाम्याद्भेदानध्यवसायः ।

सामान्यमिति ॥ यदि सादृश्याद्विशेषो भेदकधर्मविवेको नोपलक्ष्यते न ज्ञायते । द्वित्वप्रतीतावपीति भावः । तर्हि सामान्यं समानयोर्भावः सामान्यं इति व्युत्पत्तेः । पद्माकरप्रविष्टानां तडागावगाहानाम् । यद्वा पद्मसमूहे प्रविष्टा-

सामान्यं यदि सादृश्याद्विशेषो नोपलक्ष्यते ॥
पद्माकरप्रविष्टानां मुखं नालक्षि सुभ्रुवाम् ॥ १४६ ॥

नाम् । पद्माकरस्तडागः स्यादित्यमरः । सुभ्रुवां सुंदरीणां मुखं नालक्षि । पद्मभेदे प्रतीयमानेऽपि हास्यादिभेदकधर्मं विना मुखमेतदिति न ज्ञातम् ॥ १४६ ॥

१. रत्नस्तंभेषु संक्रांतप्रतिबिंबशतैर्वृतः । लंकेश्वरः सभामध्ये न ज्ञातो वालिसूनुना ॥ मीलितालंकारे एकेनापि परस्परभिन्नस्वरूपानवभासरूपं मीलनं क्रियते । सामान्यालंकारे तु भिन्नस्वरूपावभासेऽपि [illegible]

षकौ भवतः । भेदस्फूर्तावुन्मीलितं मीलितप्रतिद्वंद्वी वैशिष्ट्यस्फूर्तौ च विशेषकः सामान्यप्रतिद्वंद्वी । उदाहरणम् । उन्मीलितं यथा । हे राजन् सुराः देवाः त्वद्यशोमृष्टं त्वद्यशसा धवलितम् । मृजेः शुद्ध्यर्थात्कर्मणि क्तः । मग्नमिति पाठे

भेदवैशिष्ट्ययोः स्फूर्तावुन्मीलितविशेषकौ ॥
हिमाद्रिं[2] त्वद्यशोमृष्टं सुराः शीतेन जानते ॥

मस्जेः कर्तरि क्तः । यशसि मग्नमिति सप्तमीतत्पुरुषः । हिमाद्रिं हिमाचलं शीतेन जाड्येन । शीतं गुणे तद्वदर्था इत्यमरः । जानते शीतत्वादयं हिमाद्रिर्न तु यशोराशिरिति भेदेन विंदतीत्यर्थः । लक्षितानीति ॥ विशेषको यथा । चंद्रे

---

१ सामान्यरीत्या विशेषास्फुरणे प्राप्ते कुतश्चित्कारणाद्विशेषस्फूर्तौ तत्प्रतिद्वंद्वी विशेषकः । २ इतः सरोजेषु सितेषु संस्थितो न लक्ष्यते हंसगणः समंततः । कदाचिदायाति विभेदमप्यसौ पतङ्किरफप्रचलत्पतत्रकैः ॥ इति काव्यविलासे ।

उदिते सति पद्मानि मुखानि च लक्षितानि संकोचविशिष्टानि पद्मानि संकोचाभावविशिष्टानि च मुखानीति विविच्य ज्ञातानीत्यर्थः। पूर्वत्र भेदमात्रज्ञानमुत्तरत्र भेदज्ञानानंतरं द्वयोर्लक्षणज्ञानमिति भेदः ॥ १४७ ॥ किंचिदिति ॥

लक्षितान्युदिते चंद्रे पद्मानि च मुखानि च ॥ १४७ ॥
किंचिदाकूतसहितं स्याद्गूढोत्तरमुत्तरम् ॥
यत्रासौ वेतसी पांथ तत्रेयं सुतरा सरित् ॥ १४८ ॥

किंचिदाकूतसहितं किंचिच्च तदाकूतं चेति कर्मधारयः। तेन सहितं युक्तमुत्तरं गूढोत्तरं स्यात् स्पष्टम्। उदाहरणम्। हे पांथ पथिक यत्रासौ वेतसी। इयं सरित् तत्र सुतरा सुखेन तीर्यतेऽसौ सुतरा। ईषद्दुरित्यादिना कर्मणि खल्प्रत्ययः।

१ काकः कृष्णः पिकः कृष्णः को भेदः पिककाकयोः। वसंतकाले संप्राप्ते काकः काकः पिकः पिकः ॥ ग्रामेऽस्मिन्प्रस्तरप्राये न किंचित्पांथ विद्यते। पयोधरोन्नतिं दृष्ट्वा वस्तुमिच्छसि चेद्वस ॥ आस्तरणादिक[illegible] प्रत्यक्ति- [illegible] वस्तुमिच्छसि चेद्वस।

...स्यानभावयोरित्यभिप्राय-
णोत्तरमिति लक्षणानुगतिः। अत्र ध्वनित्वेऽप्यलंकारत्वं न हीयते इति प्रांचः १४८
॥प्रश्नेति॥ प्रश्नोत्तरांतराभिन्नं प्रश्नश्च उत्तरांतरं चेति द्वंद्वः ताभ्यामभिन्नं यदुत्तरं तच्चित्रमुत्तरं चित्रोत्तरमित्यर्थः। यद्यप्यत्र वाक्येन संज्ञानवगमात् समासो युक्तस्तथापि मुरं द्विषन्नित्यादौ क्वचिदसमासेऽपि संज्ञात्वमस्तीति न दोषः। तच्च

प्रश्नोत्तरांतराभिन्नमुत्तरं चित्रमुत्तरम् ॥
के दारपोषणरताः के खेटाः किं चलं वयः ॥ १४९ ॥

द्विविधं प्रश्नाभिन्नमुत्तरांतराभिन्नं चेति। आद्यं यथा। दारपोषणरताः पत्नीपोषणतत्पराः के इति प्रश्नः। केदारपोषणरताः क्षेत्रपालनतत्परा इत्युत्तरं तच्च प्रश्नाभिन्नं चित्रोत्तरम्। द्वितीयं यथा। खेटाः खगाः के इत्येकः प्रश्नः। चलं लोलं किमिति द्वितीयः प्रश्नः। द्वयोरप्युत्तरं वयः पक्षिणः विशब्दस्य जसि रूपम्। किं

च। वयोबाल्यादि। वयः पक्षिणि बाल्यादावपीत्यमरः। भेदद्वयं श्लेषसंकीर्णम् ॥१४९॥ सूक्ष्ममिति ॥ पराशयाभिज्ञेतरसाकूतचेष्टितं पराशयाभिज्ञः परभाववेदी य इतरोऽन्यस्तस्य यत् साकूतचेष्टितं साभिप्रायक्रियाकरणं तत्सूक्ष्मम्। उदाहरणम्। सा कामिनी मयि पश्यति सति संकेतकालजिज्ञासया प्रेक्षमाणे

सूक्ष्मं पराशयाभिज्ञेतरसाकूतचेष्टितम् ॥
मयि पश्यति सा केशैः सीमंतमणिमावृणोत ॥ १५० ॥

सति केशैः सीमंतमणिं सीमंतभूषणरत्नं नभोमणिसदृशमिति भावः। केशैः शिरोरुहैरंधकारसदृशैरिति भावः। आवृणोत् संवृणोतिस्म। सूर्ये तमसा संवृते त्वत्कार्यं भविष्यतीत्यभिप्रायगर्भं चेष्टितं सहृदयमात्रसंवेद्यत्वात् सूक्ष्मम्। कश्चित्कराभ्यामुपगूढनालमित्यादौ परभावानभिज्ञत्वचेष्टितं तु नालंकारः। न

...या विदग्धया। आसीन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥ २ सूर्यः।

पिहितमिति ॥ परवृत्तांतज्ञातुः परवार्तामर्मज्ञस्य साकूतचेष्टितं साभिप्रायं च-
ष्टनं मर्मज्ञानसूचकव्यापारकरणमित्यर्थः । पिहितम् । अपिपूर्वाद्दधातेर्भावे क्तः ।
भागुरिमतेनापिशब्दस्याकारलोपः । उदाहरणम् । प्रातः प्रभाते प्रिये गृहा-

पिहितं परवृत्तांतज्ञातुः साकूतचेष्टितम् ॥
प्रिये गृहागते प्रातः कांता तल्पमकल्पयत् ॥ १५१ ॥

गते सति कांता प्रिया तल्पं शय्याम् । तल्पं शय्याट्टदारेष्वित्यमरः । अकल्प-
यत् अरचयत् । अत्र रात्रौ पुंश्चलीसंगतेन त्वया जारं कृतमिति च मया ज्ञात-
मिति शय्यारचनेन मर्मोद्घाटनं कृतं तच्च गूढत्वात्पिहितम् । सूक्ष्मालंकारे भाव्य-

१ वक्रस्पंदिस्वेदबिंदुप्रबंधैर्दृष्ट्वा भिन्नं कुंकुमं कापि कंठे । पुंस्त्वं तन्व्या व्यंजयंतीव यस्याः स्मित्वा पाणौ खड्गलेखां लिलेख ॥ अत्र स्वेदानुमितं पुरुषायितं पुरुषोचितस्य खड्गलेखनेन प्रकाशितम् ।

र्थसाधनानुकूलं चेष्टितमिति ततो भेदः ॥ १५१ ॥ व्याजोक्तिरिति ॥ अन्यहेतूक्त्या हेत्वंतरकथनेन। बाहुलकात् मयूरव्यंसकादिसूत्राप्रवृत्तिः। यत् आकारस्य गोपनमप्रकाशनं व्याजोक्तिः स्पष्टम्। उदाहरणम्। हे सखि त्वं पश्य अहं गृहारामपरागैः भवनवाटिकारजोभिः। परागः पुष्परजसि धूलिस्नानीययोरपीति

व्याजोक्तिरन्यहेतूक्त्या यदाकारस्य गोपनम् ॥
सखि पश्य गृहारामपरागैरस्मि धूसरा ॥ १५२ ॥
गूढोक्तिरन्योद्देश्यं चेद्यदन्यंप्रति कथ्यते ॥

विश्वः। धूसरा मलिना अस्मि पश्य। वाक्यार्थः कर्म। पश्यानवद्यांगि विभाति गंगेतिवत्। अत्र भूमौ जारोपभोगजन्यधूसरस्य परागस्पर्शहेतुकत्वोक्त्या स्वमर्मगोपनं कृतम् ॥ १५२ ॥ गूढोक्तिरिति ॥ चेद्यदि अन्योद्देश्यं अन्यंप्रति

१ छेकापह्नुतेरस्याश्चायं विशेषः। यथा तस्यां वचनस्यान्यथानयनेनापन्हवः। अस्या माकारस्य हेत्वंतरवर्णनेन गोपनमिति।

द्वितीय श्लेषसंगतिः ॥ १३६ ॥ लेश इति ॥ दोषगुणयोः असत्सदर्थयोः गुण-दोषत्वकल्पनं दोषस्य गुणत्वकल्पनं गुणस्य च दोषत्वकल्पनमित्यर्थः । लेशो-

विपदः[1] संतु नः शश्वद्यासु संकीर्त्यते हरिः ॥ १३६ ॥
लेशः[2] स्याद्दोषगुणयोर्गुणदोषत्वकल्पनम् ॥
अखिलेषु[3] विहंगेषु हंत स्वच्छंदचारिषु ॥

ऽलंकारः स्यात् । लेशः कल्पनालेशोऽस्त्यस्मिन्निति लेशः । रूपकादिष्विव सो-

---

१ मय्येव जीर्णतां यातु यत्त्वयोपकृतं कपे । नरः प्रत्युपकारार्थी विपत्तिमभिकांक्षति ॥ इयं हनूमंतं प्रति राघव-स्योक्तिः । अत्र प्रत्युपकाराभावो दोषः तदभ्युपगमहेतुर्गुणो विपत्त्याकांक्षाया अप्रसक्तिः सा च व्यतिरेकमुखप्रयुक्तेन सामान्येन विशेषसमर्थनरूपेणार्थांतरन्यासेन दर्शिता यथा वा । भजेम भवदंतिकं प्रकृतिमेत्य पैशाचिकीं किमित्यमरसंपदं प्रमथनाथ नाथामहे । भवद्भवनदेहलीबहुलतुंडदंडाहतित्रुटन्मुकुटकोटिभिर्मघवदादिभिर्भूयते ॥ २ दोषस्य गुणत्वकल्पनं गुणस्य दोषत्वकल्पनं च लेशः । ३ संतः सच्चरितोदयव्यसनिनः प्रादुर्भवद्यंत्रणाः सर्वत्रैव जनापवादचकिता जीवंति दुःखं सदा । अव्युत्पन्नमतिः कृतेन न सता नैवासता व्याकुलो युक्तायुक्तविवेकशून्यहृदयो धन्यो जनः प्राकृतः ॥

प्रपत्तिकल्पनाभावाल्लेशत्वम् । उदाहरणम् । हंतेति खेदे । अखिलेषु सर्वेषु विहंगेषु पक्षिषु स्वच्छंदचारिषु स्वेच्छाविहारिषु सत्सु हे शुक ते तव पंजरबंधः पंजरारोपणरूपो बंधः मधुराणां प्रियाणां गिरां वाचां फलम् । अत्र सर्वपक्षिणामवाग्मित्वदोषो गुणत्वेन शुकस्य वाग्मित्वगुणो दोषत्वेन च वर्णितः । अप्रस्तुतप्रशंसाप्यत्र संभवति ॥ १३७ ॥ सूच्यार्थेति ॥ प्रकृतार्थपरैः प्रस्तुतार्थ-

शुक पंजरबंधस्ते मधुराणां गिरां फलम् ॥ १३७ ॥

सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः ॥

प्रतिपादकैः पदैः सूच्यार्थसूचनं व्यंग्यार्थबोधनं मुद्रा मुद्रणम् । प्रकृतार्थे अप्रकृतार्थनिवेशनं मुद्रेति व्युत्पत्तेः । उदाहरणम् । सा तरुणी युवतिः नितंबगुर्वी नितंबयोर्गुर्वी पीननितंबेत्यर्थः । दृग्युग्मविपुला च विशालनयनयुगलेत्यर्थः । अत्र [illegible]नार्थपरे दृग्युग्मविपुलाशब्दे छेदेनानुष्टुप्छंदोविशेषाभिधानं सूच्यते ।

अस्य श्लोकस्य तद्विषयत्वात् । एवं हलायुधकृतायां छंदःशास्त्रवृत्तौ [illegible]च्छंदो-
नामानि सूचितानि । विष्णुभक्तिकल्पलतायां च तिथिवारादिनामानि सूचि-
तानि । तत्र मुद्रानामैवालंकारः ॥ १३८ ॥ क्रमिकेति ॥ क्रमिकाप्रकृतार्थानां
क्रमं प्राप्तानामप्रस्तुतवस्तूनां न्यासं निवेशनं रत्नावलीं विदुः कथयंतीत्यर्थः ।

निंतंबगुर्वी तरुणी दृग्युग्मविपुला च सा ॥ १३८ ॥
क्रमिकाप्रकृतार्थानां न्यासं रत्नावलीं विदुः ॥

गौणोऽयं रत्नावलीशब्दः । यथा रत्नपंक्तिः सुवर्णे खचिता भवति तथा प्रस्तुता-
र्थपंक्तिः प्रस्तुतवाक्ये निवेशिता यत्र भवतीति सादृश्यानुगमात् । उदाहरणम् ।
हे महीपते त्वं चतुरास्यः सुंदरवदनः चतुर्मुखश्चेति श्लिष्टरूपकम्[1] । लक्ष्म्याः
पतिः संपत्तिशाली रमापतिश्चेति श्लिष्टरूपकम् । सर्वज्ञः सर्वविच्छंकरश्चेति

१ अश्विनी वसतु भूप मंदिरे मंदिरे वसतु ते पुनर्वसु । रेवतीपतिकनिष्ठसेवया कृत्तिकातनयविक्रमो भव ॥

श्लिष्टरूपकम् । सर्वज्ञस्त्रिपुरांतकस्त्रिनयन इति हलायुधः । अत्र प्रकृते राज्ञि प्रसिद्धक्रमाणां ब्रह्मादीनामारोपः मुद्रालंकारे सूच्यार्थस्य प्रकृतान्वयो नास्ति इह सोऽस्तीति भेदः ॥ १३९ ॥ तद्गुण इति ॥ स्वगुणत्यागात् स्ववर्णपरिहारेण अन्यदीयगुणग्रहः परकीयवर्णग्रहणं तद्गुणः सः । परकीयगुणो यस्मिन्निति

चैतुरास्यः पतिर्लक्ष्म्याः सर्वज्ञस्त्वं महीपते ॥ १३९ ॥

तद्गुणः स्वगुणत्यागादन्यदीयगुणग्रहः ॥

व्युत्पत्तेः । अत्र गुणशब्दो वर्णवाची कोशस्तु प्रागुक्तः । उदाहरणम् । हे प्रिये ते तव नासामौक्तिकं नासाभरणं मौक्तिकमिति मध्यमपदलोपी समासः । अधरत्विषा अधरोष्ठकांत्या पद्मरागायते कुरुविंदायते । कर्तुः क्यङित्याचारे क्य-

१. रत्याप्तप्रियलांछने कठिनतावासे रसालिंगिते प्रह्लादैकरसे क्रमादुपचिते भूभृद्गुरुत्वापहे । कोकस्पर्धिनि भोगभाजि जनितानंगे खलीनोन्मुखे भाति श्रीरमणावतारदशकं बाले भवत्याः स्तने ॥

(१ जनितं अनंगं अंगरहितं मौनादि येन तस्मिन् । इत्यनेन बौद्धावतारः सूचितः ।)

ङ् प्रत्ययः। अत्र मौक्तिकस्य शुल्कगुणत्यागेनाधरशोणवर्णग्रहणात् तद्गुणः। अत्र गृह्यमाणगुणस्योत्कृष्टत्वमर्थसिद्धमिति नोक्तम् ॥ १४० ॥ पुनरिति ॥ पुनः स्वगुणसंप्राप्तिः स्वगुणस्य परेण तिरोहितस्य पुनः संप्राप्तिः पूर्वरूपम्। पूर्वं प्राचीनं रूपं यस्मिन्निति व्युत्पत्तेः। उदाहृतम्। उदाहरणम्। हरकंठांशु-

पंज्ञरागायते नासामौक्तिकं तेऽधरत्विषा ॥ १४० ॥
पुनः स्वगुणसंप्राप्तिः पूर्वरूपमुदाहृतम् ॥

लिप्तोऽपि हरकंठांशुभिर्नीलवर्णैर्लिप्तोऽपि श्यामीकृतोऽपीत्यर्थः। शेषः फणिराजः त्वद्यशसा शुक्लेन पुनः सितो जातः। अमूर्तस्यापि यशसः सितत्वं कवयो वर्णयंति। तथा च वाग्भट्टः। अप्यदृश्यां सितां कीर्तिमकीर्तिं च ततोऽन्यथेति।

---

१ वीर त्वद्रिपुरमणी परिधातुं पल्लवानि संस्पृश्य। न हरति वनभुवि निजकररुहरुचिखचितानि पांडुपत्रधिया ॥ वीरेति। हे वीर त्वदरिकामिनी वनभुवि परिधानं कर्तुं पल्लवानि करेण संस्पृश्य पांडुपत्रबुद्ध्या न हरति न गृह्णाति। कीदृशानि निजकररुहाणां नखानां रुच्या श्वेतकांत्या खचितानि व्याप्तानीत्यर्थः।

निबध्नीयादिति शेषः ॥ १४१ ॥ पूर्वेति ॥ वस्तुनि वर्ण्यमानपदार्थे विकृते विकारं प्राप्ते सति । विकारो द्विविधः । नाशो रूपांतरापत्तिश्च पूर्वावस्थानुवृत्तिः

हरकंठांशुलिप्तोऽपि शेषः स्त्वद्यशसा सितः ॥ १४१ ॥
पूर्वावस्थानुवृत्तिश्च विकृते सति वस्तुनि ॥

पूर्वावस्थाप्राप्तिश्च । चशब्देन पूर्वरूपमाकृष्यते । नृपसद्मनि दीपे निर्वापितेऽपि

१. विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरंत्या । रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः ॥ विभिन्नेति । माघे रैवतकगिरिवर्णनमेतत् । गरुडाग्रजेनारुणेन विभिन्नवर्णा मिश्रितवर्णाः सूर्यस्य रथ्या अश्वा यत्र गिरौ वंशांकुरवन्नीलै रत्नैः परितः स्फुरंत्या रुचा स्वां रुचं नीलद्युतिमानिन्यिरे आनीतवंतः । रुचा विभिन्नवर्णा इति वान्वयः । द्वारं खड्गिभिरावृतं बहिरपि प्रस्विन्नगंडैर्गजैरंतः कंचुकिभिर्लसन्मणिधरैरध्यासिता भूमयः । आक्रांतं महिषीभिरेव शयनं त्वद्विद्विषां मंदिरे राजन्सैव चिरंतनप्रणयिनी शून्येऽपि राज्यस्थितिः ॥ द्वारमिति । हे राजन् तव विद्विषां मंदिरे शून्येऽपि चिरंतनः प्रणयो यस्याः सैव राज्यस्य स्थितिर्मर्यादास्तीति शेषः । यतो द्वारं खड्गिभिर्गंडकाख्यपशुभिरेव खड्गधारिभिरावृतं बहिरपि भूमयः मदप्रस्विन्नगंडैर्गजैरध्यासिताः अंतःपुरभूमयः विलसन्मणिधारिभिः कंचुकिभिः सर्पैरेव सौविदल्लैरध्यासिताः शयनं तल्पं महिषीभी राजवनिताभिरेव महिषस्त्रीभिराक्रांतमित्यन्वयः ।

शमितेऽपि सुरतह्रियेति शेषः । कांचीरत्नै रशनामणिभिः महदाधिक महस्तेज आसीत् । अत्र दीपतेजोविकारेऽपि रत्नतेजसा सद्मनः पूर्वावस्थानुवृत्तिः विशेषालंकारे प्रकृतवस्तुनः स्थानांतरावस्थानवर्णनम् । इह तु वस्त्वंतरेण तत्कार्यसिद्धिवर्णनमिति भेदः ॥ १४२ ॥ संगतेति ॥ संगतान्यगुणानंगीकारं संगतस्य मीलितस्यान्यस्य यो गुणस्तस्यानंगीकारमग्रहणमतद्गुणं आहुः । तद्गु-

दीपे निर्वापितेऽप्यासीत्कांचीरत्नैर्महन्महः ॥ १४२ ॥
संगतान्यगुणानंगीकारमाहुरतद्गुणम् ॥

णविरुद्धत्वादित्यर्थः । उदाहरणम् । हे नाथ चिरं चिरकालं रागिणि प्रेमयुक्ते सिंदूरादिरागयुक्ते चेति श्लिष्टरूपकम् । मच्चित्ते मम हृदये निहितो निवेशितोऽपि न रज्यसे स्वयमेव रक्तो न भवसि । रंजेः कर्मकर्तरि लट् । रज्यसीति पाठे रंजिर्दैवादिकोऽकर्मकः । अत्र रागिणि चेतसि निहितस्य रागाभाववर्णनमतद्गुणः

विशेषोक्तिसंकीर्णोऽयम् ॥ १४३ ॥ प्रागिति ॥ परसंनिधेरन्यसांनिध्यात् प्राक्सिद्धस्य पूर्वमेव स्वतःसिद्धस्य स्वगुणस्योत्कर्षोऽनुगुणः । गुणमुपकारमनु-

चिरं रागिणि मच्चित्ते निहितोऽपि न रज्यसे ॥ १४३ ॥

प्राक्सिद्धस्वगुणोत्कर्षोऽनुगुणः परसंनिधेः ॥

नीलोत्पलानि दधते कटाक्षैरतिनीलताम् ॥ १४४ ॥

गच्छतीत्यनुगुण इति व्युत्पत्तेः । उदाहरणम् । नीलोत्पलानि इंदीवराणि क-

१ गंडाभोगे विहरति मदैः पिच्छिले दिग्गजानां वैरिस्त्रीणां नयनकमलेष्वंजनानि प्रमार्ष्टि । यद्यप्येषा हिमकरकराद्वैतसौवस्तिकीर्ते कीर्तिर्दिक्षु स्फुरति तदपि श्रीनृसिंह क्षितींद्र ॥ गंडेति। हे श्रीमन्नृसिंहाख्य भूपते एषा तव कीर्तिः मदैः पिच्छिले पंकिले दिग्गजानां गंडप्रदेशे यद्यपि विहरति तथा वैरिस्त्रीणां नयनकमलेषु स्थितान्यंजनानि प्रमार्ष्टि प्रोंछति तथापि दिक्षु हिमकरस्य चंद्रस्य यत् किरणाद्वैतं तस्य सौवस्तिकी । स्वस्तीत्याहेत्यर्थे तदाहेति माशब्दादिभ्यष्ठग्वाच्य इत्यनेन ठक्प्रत्ययः । तत्सदृशीति यावत् । स्फुरति प्रकाशत इत्यर्थः । २ कपिरपि च कापिशायनमदमत्तो वृश्चिकेन संदष्टः । अपिच पिशाचग्रस्तः किं ब्रूमो वै कृतं तस्य ॥ अत्र कपित्वजात्या स्वतःसिद्धवैकृतस्य मद्यसेवादिभिरुत्कर्षः ।

चेटिका निसृष्टा प्रहिता सा मानिनी मां प्रत्यनुकूलां दूतीं कदा प्रेषयिष्यति इत्युत्कंठितस्य नायकस्य यत्नं विना दैवान्नायिकया सैव दूती प्रेषितेति लक्षणानुगमः। उत्कंठालक्षणं चोक्तं कुवलयानंदे ॥ १२८ ॥ वांछितादिति ॥ वां-

तामेव ध्यायते तस्मै निसृष्टा सैव दूतिका ॥ १२८ ॥
वांछितादधिकार्थस्य संसिद्धिश्च प्रहर्षणम् ॥

छितादीप्सितादधिकार्थस्याधिकगुणस्यार्थांतरस्य संसिद्धिर्लाभश्च प्रहर्षणम्। चकारबलेन प्रतीतावपि पुनर्ग्रहणं चारुतरत्वार्थम्। उदाहरणम्। यावद्दीपं उद्योतयेत्तावद्रविरभ्युदितः। अत्र दीपेच्छोरर्कलाभः प्रभातो यत्नं विना जात इति

१ मेघैर्मेदुरमंबरं वनभुवः श्यामास्तमालद्रुमैर्नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय। इत्थं नंदनिदेशतश्चलितयोः प्रत्यध्वकुंजद्रुमं राधामाधवयोर्जयंति यमुनाकूले रहः केलयः॥ अत्र राधामाधवयोः परस्परमुत्कंठितप्रसिद्धतरं अत्र ग्रंथकारेण निबद्धमित्यत्रोदाहरणे लक्षणानुगतिः।

लक्षणानुगतिः ॥ १२९ ॥ यत्नादिति ॥ उपायसिद्ध्यर्थोत्कारणलाभनिमित्ता-द्यत्नात् साक्षात्फलस्य कार्यस्य लाभश्च प्रहर्षणमिति संबध्यते । उदाहरणम् । निध्यंजनौषधीमूलं निधिबोधकमंजनं निध्यंजनं निध्यंजनार्थं औषधी निध्यं-जनौषधी । औषध्यः फलपाकांता इति कोशात् । कृदिकारादक्तिन इति ङीषं-

दीपमुद्योतयेद्यावत्तावदभ्युदितो रविः ॥ १२९ ॥
यत्नादुपायसिद्ध्यर्थात्साक्षाल्लाभः फलस्य च ॥

तोऽपि औषधीशब्दोऽस्ति । हैमस्तु ओषधिः स्यादौषधीश्च फलपाकावसानिके-त्याह । तस्याः मूलं खनता विदारयता पुंसा निधिर्धनसंचयः आसादितः प्राप्तः । निधिर्ना शेवधिर्भेदाः पद्मशंखादयो निधेरित्यमरः । अत्रांजनसंपाद-

१ चातकस्त्रिचतुरः पयःकणान्याचते जलधरं पिपासया । सोऽपि पूरयति विश्वमंभसा हंत हंत महतामुदारताम् ॥

पश्येति शेषः ।

कमूलिकाग्रहणायं भूमिं खनतस्तत्रैव निधेर्दर्शनं जातमिति लैंक्षणानुगमः ॥ १३० ॥ इष्यमाणेति ॥ इष्यमाणविरुद्धार्थसंप्राप्तिः इष्यमाणादीप्सितार्थात् विरुद्धो विपरीतो योऽर्थस्तस्य संप्राप्तिः सम्यग्लाभस्तु विपादनं स्पष्टम्।

निध्यंजनौषधीमूलं खनतासादितो निधिः ॥ १३० ॥
इष्यमाणविरुद्धार्थसंप्राप्तिस्तु विषादनम् ॥
दीपमुद्योतयेद्यावन्निर्वाणस्तावदेव सः ॥ १३१ ॥

उदाहरणम्। यावद्दीपमुद्योतयेत् स्नेहार्पणेन प्रदीपयेत् तावदेव प्रदीपो निर्वाणः नष्टः। निर्वाणो वाते इति निष्ठानत्वम्। निर्वाणं निवृतौ मोक्षे विनाशे गज-

१ रात्रिर्गमिष्यति भविष्यति सुप्रभातं भास्वानुदेष्यति हसिष्यति पंकजश्रीः। इत्थं विचिंतयति कोशगते द्विरेफे हा हंत हंत नलिनीं गज उज्जहार।

मज्जने इत्यमरः ॥ १३१ ॥ एकस्येति ॥ एकस्य कस्यंचिद्वस्तुनः गुणदोषाभ्यामुत्कर्षापकर्षाभ्यां अन्यस्य वस्तुनो यदि तौ गुणदोषौ वर्ण्येते तदोल्लासः स्पष्टम्। यद्यपि गुणदोषाभ्यामित्यत्र साहित्यासंभवात् द्वंद्वसमासो दुर्घटस्त-

एकस्य गुणदोषाभ्यामुल्लासोऽन्यस्य तौ यदि ॥
अपि मां पावयेत्साध्वी स्नात्वेतीच्छति जाह्नवी ॥ १३२ ॥

थापि भिन्नानि लक्षाणि बुद्धिस्थानि कृत्वा साहित्यं समाधेयम्। उदाहरणम्। साध्वी सती। सती साध्वी पतिव्रतेत्यमरः। स्नात्वा मामपि पावयेत् इति जाह्नवी नित्यमिच्छति। अत्र साध्व्याः पवित्रतागुणेन जाह्नव्याः स गुणो वर्णित इति

१ यदयं रथसंक्षोभादंसेनांसो निपीडितः। एकः कृती तदंगेषु शेषमंगं भुवो भरः ॥ अत्र नायिकासौंदर्यगुणेन तदंगनिपीडितस्य स्वांसस्य कृतित्वगुणो वर्णितः।

लक्षणानुगमः ॥ १३२ ॥ दोषेण दोषो यथा ॥ काठिन्यमिति ॥ कुचयोः सृष्टं काठिन्यं पलायनकाले पादपद्मयोर्वांछंत्योऽरियोषितः निहतवैरिवनिताः त्वद्धाटीषु धाराभिरटंतीति धाट्यः । पृषोदरादित्वात्साधुः । वाजिवाहिन्यः तास्वा-

काठिन्यं कुचयोः सृष्टं वांछंत्यः पादपद्मयोः ॥

गतासु विश्वधातारं ब्रह्माणं निंदंति । भर्तृवधाज्जातवैधव्यानामस्माकं व्यर्थं कुचकाठिन्यं सृष्टवंतं पलायनोपयोगिपादतलकाठिन्यं चासृष्टवंतमचतुरं वि-

१ यत्र कस्यचिद्गुणेनान्यस्य गुणो दोषेण दोषो गुणेन दोषो दोषेण गुणो वा वर्ण्यते स उल्लासः । उदाहरणानि । लोकानंदन चंदनद्रुम सखे नास्मिन्वने स्थीयतां दुर्वंशैः कठिनैरसारहृदयैराक्रांतमेतद्वनम् । ते ह्यन्योन्यनिघर्षजातदहनज्वालावलीसंकुला न स्वान्येव कुलानि केवलमिदं सर्वं दहेयुर्वनम् ॥ अत्र वेणूनां परस्परसंघर्षसंजातदहनसंकुलत्वदोषेण वननाशरूपदोषो वर्णितः । दानार्थिनो मधुकरा यदि कर्णतालैर्दूरीकृताः करिवरेण मदांधबुद्ध्या । तस्यैव गंडयुगमंडनहानिरेषा भृंगाः पुनर्विकचपद्मवने चरंति ॥ अत्र भ्रमराणामलंकारत्वगुणेन गजस्य तन्निक्षेपो दोषत्वेन वर्णितः । आघ्रातं परिचुंबितं परि मुहुर्लीढं पुनश्चर्वितं त्यक्तं वा भुवि नीरसेन मनसा तत्र व्यथां मा कृथाः । हे सद्रत्न तवैव देव कुशलं यद्वानरेणादरादंतःसारविचारणव्यसनिना चूर्णीकृतं नाश्मना ॥ अत्र वानरस्य चापलदोषेण रत्नस्य चूर्णताभावो गुणत्वेन वर्णितः ।

धातारं धिगिति दुःखाद्गर्हयंतीत्यर्थः। अत्र कुचकाठिन्यव्यर्थत्वदोषेण विधातुर्निंदादोषो वर्णितः ॥ १३३ ॥ गुणेन दोषो यथा ॥ तदिति ॥ तत् धनस्यैव अभाग्यं भाग्यहीनत्वम्। तत्किमित्यत आह। यद्यस्मात्सज्जनं साधुम्। साधुसभ्यार्यसज्जना इत्यमरः। नाश्रयति न सेवते । अत्र सज्जनस्य सेव्यत्व-

निंदंति विश्वधातारं त्वद्घाटीष्वरियोषितः ॥ १३३ ॥
तदभाग्यं धनस्यैव यन्नाश्रयति सज्जनम् ॥
लाभोऽयमेव भूपाल सेवकानां न चेद्वधः ॥ १३४ ॥

गुणेन धनस्याभाग्यत्वदोषो वर्णितः। दोषेण गुणो यथा। चेद्यदि भूपालसेवकानां वधो न भवेत्तर्हि धनप्राप्तिं विनाप्ययमेव जीवनरूप एव लाभः। अत्र राज्ञः क्रौर्यदोषेण सेवकानां वधाभावो गुणत्वेन वर्णितः। केचित्तु हे भूपालेति संबोध्य राजानं प्रति सेवकस्येयमुक्तिरित्याहुस्तन्न। सेवकस्यैवंविधप्रागल्भ्या-

नौचित्यात् ॥ १३४ ॥ ताभ्यामिति ॥ यदि ताभ्यां [illegible] ता गुणदोषौ न स्यातां तर्हि सा अवज्ञालंकृतिः । अत्र गम्यमानोऽप्यलंकृतिशब्दश्च-

ताभ्यां तौ यदि न स्यातामवज्ञालंकृतिस्तु सा ॥
स्वल्पमेवांबु लभते प्रस्थं प्राप्यापि सागरम् ॥

मत्काराल्पत्वेऽपि बाधाभावद्योतनार्थः । उदाहरणम् । गुणेन गुणाभावो यथा ।

१ मदुक्तिश्चेदंतर्मदयति सुधीभूय सुधियः किमस्या नाम स्यादलसपुरुषानादरभरैः । यथा यूनस्तद्वत्परमरमणीयापि रमणी कुमाराणामंतःकरणहरणं नैव कुरुते ॥ मदुक्तिरिति । ममोक्तिः । कविता सुधियोंऽतःकरणं सुधीभूयामृतीभूय चेन्मदयति तोषयति तदास्या मदुक्ते रसानां नीरसानां पुरुषाणामनादरसमूहैः किं नाम स्यान्न किंचिदित्यर्थः । कंचिदलसेति पाठः । परमरमणीयापि रमणी स्त्री यूनस्तरुणस्य यथांतःकरणं मदयति न तथा बालानां तद्वदित्यन्वयः । त्वं चेत्संचरसे वृषेण लघुता कानाम दिग्दंतिनां व्यालैः कंकणभूषणानि कुरुषे हानिर्न हेम्नामपि । मूर्धानं कुरुषे जलांशुमयशः किं नाम लोकत्रयीदीपस्यांबुजबांधवस्य जगतामीशोऽसि किं ब्रूमहे ॥ त्वं चेदिति शिवं प्रति कस्यापि कवेरुक्तिः । जलांशुं चंद्रं पक्षे । जडांशुं अंबुजबांधवः सूर्यः अन्यत्स्पष्टम् । अत्राद्ये कविता रमणी गुणाभ्यामलसबालहृदयोल्लासरूपगुणाभावो वर्णितः । द्वितीये परमेश्वरानंगीकारदोषेण दिग्गजादीनां लघुतादिदोषाभावो वर्णितः । इत्यवज्ञालंकारः ।

प्रस्थं प्रस्थपरिमितजलपात्रं सागरं वारिधिं प्राप्यापि स्वल्पमेवांबु सलिलं लभते । अत्र सागरस्य महत्त्वगुणेन प्रस्थस्याधिकजललाभगुणाभावो वर्णितः । दोषे दोषाभावो यथा ॥ मीलंतीति ॥ यदि चंद्रोदये पद्मानि मीलंति संकुचंति तर्हि अमृतद्युतेः सुधांशोः का हानिः । अत्र पद्मनिमीलनदोषेण चंद्रस्य हानिरूपदोषाभावो वर्णितः । सुधांशुत्वगुणबलेन पद्मद्वेषरूपदोषस्य तिरस्कारात्

मीलंति यदि पद्मानि का हानिरमृतद्युतेः ॥ १३५ ॥
दोषस्याभ्यर्थनानुज्ञा तत्रैव गुणदर्शनात् ॥

षट्पदी ॥ १३५ ॥ दोषस्येति ॥ दोषस्याप्रियस्याप्यभ्यर्थना अनुज्ञानामालंकृतिः । दोषाभ्यर्थनायां हेतुमाह । तत्रैव दोषे एव गुणदर्शनात् गुणकल्पनादित्यर्थः । उदाहरणम् । नोऽस्माकं भक्तानां शश्वन्नित्यं विपदः संतु । यासु विपत्सु हरिर्विष्णुः संकीर्त्यते । अत्र विपद्दोषप्रार्थना हरिकीर्तनगुणानुगुणत्वा-

कः। कारको ज्ञापकश्चेति द्विधा सोऽप्युपदिश्यते इति। तत्र दंडेन घट इत्यादिकारकहेतौ चमत्काराभावान्न काव्यलिंगत्वम्। उदाहरणम्। हे मंद मूर्ख कंदर्प मया जितोऽसि त्वमिति शेषः। यतः मच्चित्ते त्रिलोचनः शिवोऽस्ति। अत्र स्मरस्य

जितोऽसि मंद कंदर्प मच्चित्तेऽस्ति त्रिलोचनः ॥ १२० ॥

जयो दुष्करत्वात्समर्थनसापेक्षः। तस्य समर्थनं च शिवसान्निध्योक्त्या कृतमिति वाक्यर्थहेतुकं काव्यलिंगम्। पदार्थहेतुकं तु प्रपंचितं कुवलयानंदे। अत्र त्रिलोचनपदस्य साभिप्रायत्वात्परिकरांकुरेण परिकरेण वा तस्य संकर इति दिक्

---

१ काव्यलिंगे तु पदार्थवाक्यार्थावेव हेतुभावं भजतः । ननु यद्यपि सुखावलोकोच्छेदिनीत्यादिपदार्थहेतुककाव्यलिंगोदाहरणे अग्रेऽप्यनतिमानित्यादिवाक्यार्थहेतुककाव्यलिंगोदाहरणे च पदार्थवाक्यार्थावेव हेतुभावं भजतस्तथापि प्रशुनाप्यपुरस्कृतेनेति पदार्थहेतुकोदाहरणे मच्चित्तेऽस्ति त्रिलोचन इति वाक्यार्थहेतुकोदाहरणे च प्रतीयमानार्थस्यापि हेतुको ह्यनुप्रवेशो दृश्यते । पशुनेति ह्यविवेकत्वाभिप्रायगर्भम् ।

॥ १२० ॥ उक्तिरिति ॥ सामान्यविशेषयोः बहुव्यापकाल्पव्यापकयोरर्थयोरुक्तिः युगपदिति शेषः । अर्थान्तरन्यासः स्पष्टम् । उदाहरणम् । हनूमान् वज्रांगः अब्धिं सागरमतरत् उल्लंघितवान् । धातूनामनेकार्थत्वात् । तथा हि । महात्मनामलौकिकानां दुष्करं किं न किंचिदित्यर्थः । अत्र प्रकृतार्थविशेषस्य

उक्तिरर्थांतरन्यासः स्यात्सामान्यविशेषयोः ॥
हनूमानब्धिमतरद्दुष्करं किं महात्मनाम् ॥ १२१ ॥
गुणवद्वस्तुसंसर्गाद्याति स्वल्पोऽपि गौरवम् ॥

समर्थनार्थं सामान्यार्थोक्तिः । सामान्यविशेषत्वेनोक्तिरर्थांतरन्यासः । हेतुहेतुमद्भावेनोक्तिः काव्यलिंगमिति निर्णयः कुवलयानंदे । कार्यकारणभावेनोक्तिस्तु काव्यलिंगेंऽतर्भवति । अर्थांतरन्यासे इति केचित् ॥१२१॥ विशेषस्य सामान्येन समर्थनमुदाहृत्य सामान्यस्य विशेषेण समर्थनमुदाहरति ॥ गुणवदिति॥

गुणवद्वस्तुसंसर्गात् गुणयुक्तपदार्थयोगात् स्वल्पोऽपि पदार्थो गौरवं महत्त्वं याति । तथा हि । सूत्रं कार्पासादितंतुः पुष्पमालानुषंगेण कुसुमपंक्तिसंगेन शिरसि धार्यते । शिरःशब्दोऽत्र कंठपरः । अत्र गंधगुणयुक्तानां पुष्पाणामनुषंगात् सूत्रस्य लघुपदार्थस्य गौरवं भारवत्त्वमादरो वा जात इति लक्षणानुगमः । अत्र पुष्पाणां किंजल्कतंतुशालित्वाद्गुणवत्त्वमिति केचित् । तंतुग्रथितत्वादित्यन्ये।

पुष्पमालानुषंगेण सूत्रं शिरसि धार्यते ॥ १२२ ॥

यस्मिन्विशेषसामान्यविशेषाः स विकस्वरः ॥

सुगंधशालित्वादिति तु कुशलाः। गुणशब्दो हि प्रत्यंचारूपे तंतौ प्रसिद्धो न तु किंजल्कादौ । तथा च केशवः । गुणोऽप्रधाने रूपादौ मौर्व्यां सूत्रे वृकोदरे । स्तंभे सत्वादिसंध्यादिविद्यादिहरितादिष्विति ॥ १२२ ॥ यस्मिन्निति ॥ यस्मिन् विशेषसामान्यविशेषाः क्रमेण भवंति स विकस्वरः । विकसन् साधु करोति वि-

कस्वर इति व्युत्पत्तेः। कस् विकाशे इति धातोः साधुकारिणि क्वरप्। शब्दविस्तरोऽर्थविस्तारश्च विकसनत्वेनाभिमतः। ततश्चमत्कारविस्तारोऽलंकारः। उदाहरणम्। स राजा पैरैर्न जिग्ये। हि यस्मान्महांतो दुर्धर्षाः दुर्जया भवंति। क इव सागरा इव। यथा महत्त्वात्सागरा दुर्धर्षाः। अत्रोपमानविधयार्थत्रयवि-

सं न जिग्ये महांतो हि दुर्धर्षाः सागरा इव ॥ १२३ ॥
प्रौढोक्तिरुक्तार्थाहेतोस्तद्धेतुत्वप्रकल्पनम् ॥[2]

न्यासः प्रकारांतरमप्यस्ति कुवलयानंदे। प्राचां मते त्वर्थांतरन्यासयोः संकरोऽयं न त्वलंकारांतरं तस्यैव नामांतरं वा ॥ १२३ ॥ प्रौढोक्तिरिति ॥ उक्तार्थाहेतोः उक्तार्थस्य प्रकृतार्थस्याहेतोः तद्धेतुत्वप्रकल्पनं वर्णनीयकारणताभिधानं प्रौ-

१ अनंतरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम्। एको हि दोषो गुणसंनिपाते तिमज्जतींदोः किरणेष्विवांकः ॥

२ उत्कर्षस्याहेतावुत्कर्षहेतुत्वकल्पनं प्रौढोक्तिः।

ढोक्तिः। प्रौढानां धीमतामुक्तिरिति व्युत्पत्तेः। विचित्रकल्पनाशालिनो हि धीमंतः। उदाहरणम्। कृष्णस्य कचाः केशाः कलिंदजातीरतमालस्तोममेचकाः कलिंदजा कलिंदपर्वतप्रसूता यमुना तस्यास्तीरे ये तमालस्तोमाः त इव मेचकाः श्यामाः। मेचकौ श्याम‌धूमलाविति केशवः। अत्र तमालानां श्यामलत्वे यमुना-

कचाः कलिंदजातीरतमालस्तोममेचकाः ॥ १२४ ॥
संभावनं यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये ॥

तीरोत्पन्नत्वं न तु हेतुरित्यहेतोस्तस्य श्यामसमीपस्थं श्यामं भवतीतियुक्तिमाश्रित्य तमालविशेषणं कृतमिति लक्षणानुगमः ॥ १२४ ॥ संभावनमिति ॥ अन्यस्य व्यंग्यार्थस्य वाच्यादन्यस्य सिद्धये प्रतीतये यदीत्थं स्यादित्येवंविध ऊहो वितर्कः संभावनं स्पष्टम्। यद्यादिप्रयोगपूर्वकत्वाभिधानान्नातिव्याप्तिः। उ

कस्वर इति व्युत्पत्तिः। कस् विकाशे इति धातोः साधुकारिणि करप्। शब्दावि-स्तरोऽर्थविस्तारश्च विकसनत्वेनाभिमतः। ततश्चमत्कारविस्तारोऽलंकारः। उ-दाहरणम्। स राजा परैर्न जिग्ये। हि यस्मान्महांतो दुर्धर्षाः दुर्जया भवंति।



दाहरणम्। हे देव यदि वक्ता शेषःसहस्रमुखो भवेत् शेषो वा वक्ता भवेत् तर्हि तेन तव गुणाः कथिताः स्युः। अत्र यद्यादिप्रयोगपूर्वकवितर्केण गुणानामगण्यत्व-

यदि शेषो भवेद्वक्ता कथिताः स्युर्गुणास्तव ॥ १२५ ॥

किंचिन्मिथ्यात्वसिद्ध्यर्थं मिथ्यार्थांतरकल्पनम् ॥

सिद्धिः ॥१२५॥ किंचिदिति ॥ कस्यचिन्मिथ्यात्वं किंचिन्मिथ्यात्वम्। षष्ठीत-त्पुरुषः। किमः सविभक्तिकात् स्वार्थे चिदिति निपातः प्रत्ययो वा। चिदंतस्य

१ कस्तूरिकामृगाणामंडाद्गंधगुणमखिलमादाय। यदि पुनरहं विधिः स्यां खलजिह्वायां निवेशयिष्यामि ॥ कस्तूरिकेति। अहं यदि सृष्टिकर्ता स्यां तदा कस्तूरिकामृगाणामंडादखिलं गंधरूपं गुणमादाय खलजिह्वायां निवेशयिष्यामीत्यन्वयः। अस्य क्षोणिपतेः परार्धपरया लक्षीकृताः संख्यया प्रज्ञाचक्षुरवेक्ष्यमाणबधिरश्राव्याः किलाकीर्तयः। गीयंते स्वरमष्टमं कलयता जातेन वंध्योदरान्मूकानां प्रकरेण कूर्मरमणीदुग्धोदधे रोधसि ॥ अस्येति। परार्धपरया परार्धसंख्यामतिक्रांतया लक्षीकृता उपलक्षिताः प्रज्ञाचक्षुषा अंधेनावेक्ष्यमाणाश्चता बधिरश्राव्याश्चेति कर्मधारयः। कलयता कुर्वता प्रकरेण समूहेन कूर्मरमणी कच्छपी रोधसि तीरे मिथ्याध्यवसितेरित्यस्य भेद इत्यत्रान्वयः।

तत्पुरुषे षष्ठ्या लुंक्। तस्य सिद्धये इति सिद्ध्यर्थं मिथ्यार्थांतरकल्पनं मिथ्याभू-तस्यार्थांतरस्य कल्पनं मिथ्याध्यवसितिः। मिथ्याभूतमध्यवसानं मिथ्याध्य-वसितिरिति व्युत्पत्तेः। उदाहरणम्। खस्त्रजं गगनकुसुममालां वहन् सन् वेश्यां गणिकां वशयेत् वशीकुर्यात्। अत्र खपुष्पमालावहनोक्त्या वेश्यावशी-

मिथ्याध्यवसितिर्वेश्यां वशयेत्खस्रजं वहन् ॥ १२६ ॥
प्रस्तुते वर्ण्यवाक्यार्थप्रतिबिंबस्य वर्णनम् ॥

करणस्य मिथ्यात्वसिद्धिः। यद्यादिप्रयोगाभावाच्च पूर्वस्माद्भेदः ॥ १२६ ॥
प्रस्तुत इति ॥ प्रस्तुते प्रकृते वर्ण्यो वर्णनीयो यो वाक्यार्थस्तस्य प्रतिबिंबः प्रतिनिधिस्तस्य वर्णनं ललितं स्पष्टम्। उदाहरणम्। एषा नायिका नीरे नि-र्गते सति सेतुं पालिं चिकीर्षति कर्तुमिच्छति। अत्र प्रकृता नायिका तस्या ना-

यके गते सति तदानयनं कर्तुमिच्छतीति वर्णनीयो वाक्यार्थः । तत्प्रतिनिधिभूतार्थवर्णनाल्लक्षणानुगतिः । एषेति प्रस्तुतनिर्देशाद्रूपकातिशयोक्तिप्रभृतितो भेदः ॥ १२७ ॥ उत्कंठितेति ॥ यत्नं प्रयासं विना उत्कंठितार्थसंसिद्धिः उ-

लेलितं निर्गते नीरे सेतुमेषा चिकीर्षति ॥ १२७ ॥

उत्कंठितार्थसंसिद्धिर्विना यत्नं प्रहर्षणम् ॥

त्कंठितस्य संजातोत्कंठस्यार्थिनः अर्थसंसिद्धिः कार्यनिष्पत्तिः प्रहर्षणं स्पष्टम् । उदाहरणम् । तामेव प्रियानुनयकुशलतयाभीप्सितामेव दूतीं ध्यायते चिंतयते तस्मै नायकाय । क्रियाग्रहणाच्चतुर्थी । तमुद्दिश्येत्यर्थः । सैव तदभीष्टैव दूतिका

१ क सूर्यप्रभवो वंशः क चाल्पविषया मतिः । तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥ अत्रापि निदर्शनाभ्रांतिर्न कार्या । अल्पविषयया मत्या सूर्यवंशं वर्णयितुमिच्छुरहमिति प्रस्तुतवृत्तांतानुपन्यासात्तत्प्रतिबिंबभूतस्य उडुपेन सागरं तितीर्षुरस्मीत्यप्रस्तुतवृत्तांतस्य वर्णनेनादौ विषमालंकारविन्यसनेन च केवलं तत्र तात्पर्यस्य गम्यमानत्वात् ।

अत्र स्नेहक्षयस्य प्रदीपेषु नियमनं सुंदरीस्वांतेषु तन्निषेधस्पष्टीकारार्थमिति लक्षणानुगमः। स यथा सायं प्रातर्वाशनमिति श्रुतावशनस्य सायंप्रातःकालयोर्नियमेन अन्यकाले तन्निवृत्तिरर्थलभ्या। परिसंख्या विधेः फलम्मिति मीमांसकाः। तथात्रापि स्नेहक्षयस्य नियमादर्थलभ्योऽन्यत्र निषेधः स्पष्टप्रतिपत्तये निबद्ध इति परिसंख्याविधिसादृश्यात् परिसंख्यालंकाराभिधानम्। केचित्तु काव्यार्था-

विरोधे तुल्यबलयोर्विकल्पालंकृतिर्मता ॥

पत्तिकाव्यलिंगयोरिव तांत्रिकाभिमतविधिवैलक्षण्याय काव्यपदं पूरणीयमित्याहुः। मुखं व्यादाय स्वपितीत्यादिवत् नियमनोत्तरकालं निषेधेऽपि निषिध्येत्यत्र क्त्वाप्रत्ययः पूर्वभावस्य बुद्धौ स्थापितत्वात्। एवं च कुवलयानंदे संगतानि मृगाक्षीणामिति श्लोके स्त्रीसंगतस्य क्षणिकत्वोक्तेर्विरुद्धेति चेन्न। तत्र हि स्नेहस्य विषयभेदविवक्षा न तु नाशविवक्षेति ॥ ११२ ॥ विरोधे इति ॥ तुल्यबलयोः

समप्राधान्ययोरर्थयोर्विरोधे बाध्यबाधकभावे सति विकल्पालंकृतिः विकल्पनामालंकारः मता बुधैः स्वीकृता। उदाहरणम्। महीभुजो नृपाः सद्यः शिरांसि नमयंतु। चक्रवर्तिनो विजययात्रारंभमात्रेण त्वां संधिं कुर्वंत्वित्यर्थः। अथवा चापान्कोदंडान् अर्धर्चाः पुंसि चेति पुंस्त्वम्। नमयंतु नमनेनाधिज्यान् कृत्वा वि-

सद्यः शिरांसि चापान्वा नमयंतु महीभुजः ॥ ११३ ॥

ग्रहं कुर्वंत्वित्यर्थः। अत्र दूतवाक्ये संधिविग्रहयोर्बाध्यबाधकत्वाद्विरोधः। गम्यमानस्याप्यलंकृतिशब्दस्य पुनरुपादानात् चारुत्वाभावेनालंकारः। यथा शृंगालः काको वा स्पृशतु यदि वा पांडुतनय इत्यादौ बाध्यबाधकभावो न चारुत्व-

---

१ निपीय मदिरां दुरोदरवशो वसापंकिलं सदात्ति पिशितं हितं न खलु वेद नैवाहितम्। अयं यतति धावति भ्रमति मूर्छति ध्यायति प्रताम्यति पलायते प्रजपति स्फुरत्यंचति ॥ इति काव्यविलासे। २ कृतं प्राज्यं राज्यं जलधिपरिखे भूमिवलये मही भुक्ता मुक्ता निरवधि कृतं कार्यमखिलम्। इदानीं संप्राप्तं समुचितपदं वीरशयने शृगालः काको वा स्पृशतु यदि वा पांडुतनयः ॥

हेतुः ॥ ११३ ॥ बहूनामिति ॥ युगपद्भावभाजां युगपद्भवनं युगपद्भावः तद्भजनशीलानां बहूनामर्थानां गुंफः संदर्भः समुच्चयः स्पष्टम्। उदाहरणम्। हे नृप तव द्विषः नश्यंति पलायंते पश्चात्पश्यंति पृष्ठे निरीक्षंते। किंच भ्रश्यंति अधः पतंति त्रासादिति भावः। अत्र पौर्वापर्ये सत्यपि शतपत्रपत्रशतभेदन्यायेन

बहूनां युगपद्भावभाजां गुंफः समुच्चयः ॥
नश्यंति पश्चात्पश्यंति भ्रश्यंति च तव द्विषः ॥ ११४ ॥
अहंप्रथमिकाभाजामेककार्यान्वयोऽपि सः ॥

युगपद्भावो बोध्यः। अत्रापि चारुत्वानुवृत्तेः। हरिस्त्वां मां च रक्षत्वित्यत्र समुच्चयमात्रं नालंकारः ॥ ११४ ॥ अहमिति ॥ अहं प्रथमो यस्यामित्यहंप्रथमिका। शेषाद्विभाषेति कः समासांतः। यद्वा अहंपूर्विकाशब्दस्य क्षीरस्वामिनोक्ता व्युत्पत्तिर्ग्राह्या। पूर्वप्रथमशब्दयोरभिन्नार्थत्वात्। तथा हि। अहं प्रथममिति सर्वे

यत्र ब्रुवते सा अहंप्रथमिका। स्वार्थे कन् मत्वर्थीयो वा ठन्। एवं चाहंप्रथमिका-हंपूर्विकानाम युगपदेककार्यकरणत्वरा सा च कुलादीनामचेतनत्वान्न संभव-तीति तत्तुल्यायामन्वययोग्यतायां लक्षणा तां भजंतीति तथोक्तानामर्थानां पर-स्परोपमर्देनान्वययोग्यानामित्यर्थः। एककार्यान्वयः एकक्रियासंबोधोऽपि सः समुच्चयः। उदाहरणम्॥ कुलं गोत्रम्। कुलं गोत्रे गणे गृहे इति विश्वः। रूपं सौं-

कुलं रूपं वयो विद्या धनं च मदयत्यमुम् ॥ ११५ ॥
क्रमिकैकगतानां तु गुंफः कारकदीपकम् ॥

दर्यं वयो यौवनं तस्यैव मदहेतुत्वात् विद्या श्रुत्यादिः धनं वसु च अमुं भाग्यवंतं मदयति मदमुत्सेकं करोतीति मदयति। तत्करोति तदाचष्टे इति णिजंतात्क-र्तरि लटो रूपम्। अत्र कुलादीनां खलकपोतन्यायेन समप्राधान्यं चारुत्व-हेतुः॥ ११५॥ क्रमिकेति ॥ क्रमिकैकगतानां क्रमप्राप्तानामेकाश्रयाणां च

बहूनामर्थानां गुंफो रचना कारकदीपकं कारकं कर्तृकर्मादि दीप इव दीपकम् । अनेकोपकारकं यत्रेति व्युत्पत्तेः। उदाहरणम् । पांथः गच्छति पुनरागच्छति पश्यति पृच्छति च किंचिदिति शेषः। अत्र पांथशब्दस्य कर्तृकारकस्यानेकक्रियान्वितत्वाद्दीपकसादृश्यम्। अत्र क्रियाणां यौगपद्यं न विवक्षितमिति समुच्च-

गच्छत्यागच्छति पुनः पांथः पश्यति पृच्छति ॥ ११६ ॥
समाधिः कार्यसौकर्यं कारणांतरसन्निधेः ॥

याद्भेदः ॥ ११६ ॥ समाधिरिति ॥ कारणांतरसन्निधेः अन्यकारणसांनिध्यात् कार्यसौकर्यं कार्योत्पत्तिलाघवं समाधिः सम्यगाधानमुत्पादनमिति व्युत्पत्तेः। उदाहरणम्। च यदा कुंलटा पांसुला उत्कंठा उत्सुकता संजाता यस्या इत्युत्कं-

---

१ निद्राति स्नाति भुंक्ते चलति कचभरान्शोषयंत्यंतरास्ते दीव्यत्यक्षैर्न चायं गदितुमवसरो भूय आयाहि याहि । इत्युद्दंडैः प्रभूणामसकृदधिकृतैर्वारितान्द्वारि दीनान्पश्यास्मान्ये सरसिरुहरुचामंतरंगैरपांगैः ॥

ठिता । तारकादित्वादितच् । च तदा भानुमानस्तं जगाम। अत्रौत्सुक्यमात्रस्य पांसुलेप्सितसंपादकत्वेऽपि सूर्यास्तोल्लसिततमोरूपकारणांतरसान्निध्यात् सौकर्यं जातमिति लक्षणानुगमः ॥ ११७ ॥ प्रत्यनीकमिति ॥ बलवतः शत्रोः

उत्कंठिता च कुलटा जगामास्तं च भानुमान् ॥ ११७ ॥
प्रत्यनीकं बलवतः शत्रोः पक्षे पराक्रमः ॥

पक्षे सहायबले । पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिष्वित्यमरः ॥ पराक्रमः पराभवः पीडनमिति यावत् । प्रत्यनीकं अनीके इति प्रत्यनीकं विभक्त्यर्थेऽव्ययीभावः । यद्वा अनीकं लक्षीकृत्येति प्रत्यनीकम् । लक्षणेनाभिप्रती आभिमुख्ये

१ यत्र शत्रुर्बलीयान् स्वयं जेतुमशक्यः तत्र तत्पक्षाश्रितदुर्बलस्य विजयः कृत इति वर्णिते अयमलंकारः । अशक्तोऽयं तावत्तव वदनसौंदर्यविजये सुधाधामा धामप्रसरररभसादेत्य सहसा । सरोजातं जातु स्फुटतदनुकारीति मतितो निशायां सायाह्नावधि मलिनयत्येष महसा ॥ इति काव्य विलासे । मधुव्रतौघः कुपितः स्वकीयमधुप्रपापद्मनिमीलनेन । बिंबं समाक्रम्य बलात्सुधांशोः कलंकमंके ध्रुवमातनोति ॥

इत्यव्ययीभावः। उदाहरणम्। उत्पलाभ्यां कमलाभ्यां जैत्रनेत्रानुगौ साधु यथा तथा जयतः ते जेतृणी। आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिष्विति साधुकारिणि तृन् प्रत्ययः। जेतृणी एव जैत्रे। जैत्रे च ते नेत्रे च जैत्रनेत्रे तयोरनुगौ समीपवर्तिनौ सेवकौ चेति श्लिष्टरूपकम्। कर्णावधः कृतौ भारेणाक्रांतौ तिरस्कृतौ चेति श्लिष्टरूपकेण लक्षणानुगमः। तेन चोत्पलयोर्विजिगीषुत्वारोपो

जैत्रनेत्रानुगौ कर्णावुत्पलाभ्यामधः कृतौ॥ ११८॥
कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते॥

व्यज्यते इत्यलंकारेणालंकारध्वनिः। भेदांतरं कुवलयानंदे द्रष्टव्यम्॥ ११८॥ कैमुत्येनेति॥ कैमुत्येन किमुतभावः कैमुत्यं तेन किमुतशब्दप्रयोगेणेत्यर्थः। अर्थसंसिद्धिः व्यंग्यार्थप्रतिपत्तिः। काव्यार्थापत्तिः काव्यसंबंधिन्यर्थापतिः। काव्यपदं तांत्रिकार्थापत्तेर्वारणार्थं तस्याः प्रमाणालंकारेष्वंतर्भावात्। इष्यते बुधै-

रिति शेषः । उदाहरणम् । हे प्रिये त्वन्मुखेन सः प्रसिद्धः पद्मसंकोचक इंदुर्जित-स्तर्हि सरसीरुहं पद्मं जितमिति तु का वार्ता । वार्तां विनापि जातमेवेत्यर्थः । कैमु-त्यशब्दस्योपलक्षणत्वात् तदर्थशब्दांतरस्यापि प्रयोगे इत्याहुः । अत्र पद्मजे-तरि चंद्रे जिते पद्मं तु जितमेवेति दंडापूपिकान्यायेन व्यंग्यार्थाक्षेपः ॥११९॥

स[1] जितस्त्वन्मुखेनेंदुः का वार्ता सरसीरुहम् ॥ ११९ ॥

समर्थनीयस्यार्थस्य काव्यलिंगं समर्थनम् ॥

समर्थनीयस्येति ॥ समर्थनीयस्य समर्थनसापेक्षस्यार्थस्य समर्थनं दृढीकरणं हेतुपु दर्शनमिति यावत् । काव्यलिंगं काव्याभिमतं लिंगं तर्कशास्त्राभिमतलिं-गव्यावर्तनीयं काव्यपदम् । न्यायोऽनुमानं हेतुश्च लिंगं युक्तिः समर्थका इति गोवर्धनः । हेतुस्वरूपं चोक्तमग्निपुराणे । सिसाधयिषितार्थस्य हेतुर्भवति साध-

१ अधरोऽयमधीराक्ष्या बंधुजीवप्रभाहरः । अन्यजीवप्रभां हंत हरतीति किमद्भुतम् ॥

वक्तुं योग्यं यत् वाक्यं तत् अन्यं तद्भिन्नंप्रति कथ्यते तर्हि गूढोक्तिः। स्पष्टम्। उदाहरणम्। हे वृष बलीवर्द कामुक चेति श्लिष्टरूपकम्। परक्षेत्रादन्यकेदारात् अन्यदारेभ्यश्चेति श्लिष्टरूपकम्। अपेहि दूरं गच्छ। क्षेत्ररक्षकः क्षेत्रपतिः

वृषापेहि परक्षेत्रादायाति क्षेत्ररक्षकः ॥ १५३ ॥
विवृतोक्तिः श्लिष्टगुप्तं कविनाविष्कृतं यदि ॥

आयाति। अत्र परदारासक्तं कामुकंप्रति वक्तव्यं वाक्यं परक्षेत्रप्रविष्टं वृषभमुद्दिश्योक्तं प्रस्तुतांकुरे श्लेषं विनाप्यन्यार्थप्रतीतिः। अत्र तु श्लेषमहिम्नेति ततो भेदः ॥ १५३ ॥ विवृतोक्तिरिति ॥ यदि श्लिष्टगुप्तम्। श्लिष्टं च तद्गुप्तं चेति कर्म-

---

१ नाथो मे विपणिं गतो न गणयत्येषा सपत्नी पुनस्त्यक्त्वा मामिह पुष्पिणीति गुरवः प्राप्ता गृहाभ्यंतरम्। शय्यामात्रसहायिनीं परिजनः श्रांतो न मां सेवते स्वामिन्नागमलालनीय रजनीं लक्ष्मीपते रक्ष माम् ॥ अत्र लक्ष्मीपतिनाम्नो जारस्यागमनं प्रार्थयमानायास्तटस्थवंचनाय भगवंतं प्रति आक्रोशस्य प्रत्यायनम्।

( १ आगमेन वेदेन स्तुत्य; पक्षे आगमेनागमनेन लालनीय खेलनीय. )

धारयः स्नातानुलिप्तवत्। वस्तु कविना आविष्कृतं वाक्ये निबद्धं भवति तर्हि विवृतोक्तिः। विवृतस्य प्रकाशितस्यार्थस्योक्तिरिति व्युत्पत्तेः। उदाहरणम्। हे वृष बलीवर्द हे पुरुषेति श्लिष्टरूपकम्। परक्षेत्रात् परावपनात् परस्त्रियाश्चेति श्लिष्टरूपकम्। अपेहि दूरं गच्छेति ससूचनं यथा तथा वक्ति। क्वचित्कश्चिदिति

वृषापेहि परक्षेत्रादिति वक्ति ससूचनम् ॥ १५४ ॥

युक्तिः परातिसंधानं क्रियया मर्मगुप्तये ॥

शेषः। सूचनं चेत्थं परक्षेत्रे सस्यानि चरतो बलीवर्दस्य शिक्षामिषेण परवनितासक्तमित्रस्योपदेशः क्रियते इति व्यंग्यार्थस्य प्रकाशनात् मध्यमकाव्यमेतत् ॥ १५४ ॥ युक्तिरिति ॥ मर्मगुप्तये मर्मसदृशस्य गोप्यार्थस्य गुप्तये गोपनाय

१ दृष्टया केशव गोपरागहृतया किंचिन्न दृष्टं मया तेनेह स्खलितास्मि नाथ पतितां किं नाम नालंबसे। एकस्त्वं विषमेषु खिन्नमनसां सर्वाबलानां गतिर्गोप्यैवं गदितः सलेशमवताद्गोष्ठे हरिर्वश्चिरम् ॥

क्रियया चेष्टया परातिसंधानं परस्य वंचनं युक्तिः।युज्यतेऽसौ युक्तिरिति व्युत्पतेः।
उदाहरणम्। हे सखे सा त्वां आलिखंती चित्रयंती अन्यां स्वसखीभिन्नां कां-
चिद्दृष्ट्वा करे चित्रस्य पाणौ पौष्पं धनुः अलिखत्। अत्र चित्रितस्य पुंसः पाणौ
स्मरचिह्नपुष्पचापावलेखनक्रियया कामो मया चित्रित इति परवंचनं कृतं तेन

त्वामालिखंती दृष्ट्वान्यां धनुः पौष्पं करेऽलिखत् ॥ १५५ ॥
लोकप्रवादानुकृतिर्लोकोक्तिरिति कथ्यते ॥
सहस्व कतिचिन्मासान्मीलयित्वा विलोचने ॥ १५६ ॥

वर्णनीयस्य कामसादृश्यं ध्वन्यते ॥ १५५ ॥ लोकेति ॥ लोकप्रवादानुकृतिः
लोके यः प्रवादः प्रसिद्धो वादः प्रवादः। कुगतिप्रादय इति समासः। तस्यानु-
कृतिरनुसरणं प्रवादानुसारिवाक्यमित्यर्थः। लोकोक्तिः लोकानामुक्तिः प्रवादः
इति व्युत्पत्तेः। इति नाम्ना कथ्यते भण्यते। उदाहरणम्। विलोचने नेत्रे मील-

यित्वा कतिचिन्मासान्सहस्व त्वरां मा कुरु। अत्र नेत्रनिमीलनपूर्वकसहनोक्ति-र्लोकप्रवादानुसारिणी दीर्घकालं नेत्रनिमीलनं न संभवति। एवं झपं मारयित्वा तिष्ठतीत्यादावपि ज्ञेयम् ॥ १५६ ॥ छेकोक्तिरिति ॥ यत्र वाक्ये लोकोक्ते-र्लोकप्रवादस्य अर्थांतरगर्भता भिन्नार्थयुक्तता स्यात्तत्र छेकोक्तिः। छेकस्य चतु-

छेकोक्तिर्यत्र लोकोक्तेः स्यादर्थांतरगर्भता ॥

भुजंग एव जानीते भुजंगचरणं सखे ॥ १५७ ॥

रस्योक्तिरिति व्युत्पत्तेः। उदाहरणम्। हे सखे भुजंगः सर्प एव भुजंगचरणं सर्पपादं जानीते। बहिरप्रकटत्वादन्यस्तु नेति लोकोक्तिः। तत्र च भुजं वक्रं ग-च्छतीति भुजंगः। खल एव भुजंगचरणं खलचेष्टितं जानीते इत्यर्थांतरयुक्तता-

१ मलयमरुतां व्राता याता विकाशितमल्लिकापरिमलभरो भग्नो ग्रीष्मस्त्वमुत्सहसे यदि। घन घटय तं त्वं निस्नेहं य एव निवर्तने प्रभवति गवां किं न छिन्नं स एव धनंजयः ॥

प्यस्तीति लक्षणसंगतिः ॥ १५७ ॥ वक्रो...क्तिरिति ॥ श्लेषकाकुभ्यां श्लेषेण काक्वा चेत्यर्थः। अनेकलक्ष्मणां युगपद्बुद्धौ निवेशनात्। साहित्यसंभवेन द्वंद्वसमासो युक्त एवेत्युक्तम्। अपरार्थप्रकल्पनं अपरस्परविवक्षितभिन्नार्थस्य प्रक-

वक्रोक्तिः श्लेषकाकुभ्यामपरार्थप्रकल्पनम् ॥
मुंचं मानं दिनं प्राप्तं नेह नंदी हरांतिके ॥ १५८ ॥

---

१ नाथ मयूरो नृत्यति तुरगानन वक्षसः कथं नृत्यम्। नहिनहि तत्र कलापी इह सुखलापी प्रिये कोऽस्ति ॥ इति वाग्भट्टालंकारे। अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता। त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित् ॥ "भवित्री रंभोरु त्रिदशवदनम्लानिरधुना स ते रामः स्थाता न युधि पुरतो लक्ष्मणसखः। इयं यास्यत्युच्चैर्विपदमधुना वानरचमूर्लघिष्ठेदं षष्ठाक्षरपरविलोपं पठ पुनः ॥ सर्वमिदं शब्दश्लेषमूलाया वक्रोक्तेरुदाहरणम्। अंगुल्या कः कपाटं प्रहरति कुटिलो माधवः किं वसंतो नो चक्री किं कुलालो नहि धरणिधरः किं द्विजिह्वः फणींद्रः। नाहं घोराहिमर्दी किमसि खगपतिर्नो हरिः किं कपींद्र इत्थं राधाविवादप्रतिपदवचनः पातु वः पद्मनाभः ॥ भिक्षार्थी क प्रयातः सुतनु बलिमखे तांडवं क्वाद्य भद्रे मन्ये वृंदावनांते क नु स मृगशिशुर्नैव जाने वराहम्। बाले कच्चिन्न दृष्टो जरठवृषपतिर्गोप एवात्र वेत्ता लीलासंलाप इत्थं जलनिधिहिमवत्कन्ययोस्त्रायतां नः ॥

ल्पनं संपादनं वक्रोक्तिः। वक्रस्य वक्रा वा उक्तिरिति व्युत्पत्तेः। उदाहरणम्। श्लेषवक्रोक्तिर्यथा हे प्रिये मानं मुंच दिनं प्राप्तं प्रातःकालो जात इति पुरुषस्योक्तौ स्त्रिया इहात्र स्थले नंदी न नंदिकेश्वरो न। नंदिनौ नंदिकेश्वरौ इत्यमरः। किं तु हरांतिके शिवसमीपे सोऽस्तीति श्लेषेणार्थांतरं कल्पितं प्राप्तं ह-

असमालोच्य कोपस्ते नोचितोऽयमितीरिता ॥
नैवोचितोऽयमिति तं ताडयामास मालया ॥ १५९ ॥

स्तगतं नंदिनं मा मुंचेति सभंगः श्लेषः ॥१५८॥ काकुवक्रोक्तिर्यथा ॥ असमालोच्येति ॥ हे प्रिये ते तव असमालोच्य अविचार्य अयं कोपो नोचितः न युक्त इति कांतेनेरिता प्रार्थिता काचित् अयं कोपो नैवोचित इति काका विरुद्धार्थमुक्त्वा तं मालया माल्येन। माला माल्यं सौमनस्यमित्यमरः। ताडयामास

रोपचिह्नमेतत् । विपरीतार्थसंपादकः प्लुतोच्चारादिः शब्दविकारः काकुः । अत्र नकारैवकारयोः संधौ प्लुतोच्चारो विपरीतार्थद्योतकः । काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेरित्यमरः ॥ श्लेषवक्रोक्तिः शास्त्रसिद्धा काकुवक्रोक्तिस्त्वै-

स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनम् ॥
कुरंगैरुत्तरंगाक्षैस्तब्धकर्णैरुदीक्षितम् ॥ १६० ॥

च्छिकीति विशेषः ॥ १५९ ॥ स्वभावोक्तिरिति ॥ जात्यादिस्थस्य जातिगुणादिनियतस्य स्वभावस्य वर्णनं स्वभावोक्तिः । स्पष्टम् । उदाहरणम् । उत्तरंगाक्षैः उत्तरंगाण्यधिकतरंगयुक्तान्यक्षीणि येषां तैः स्तब्धकर्णैः स्तब्धा जडीभूताः कर्णा

---

१ आरूढक्षितिपालभालविगलत्स्वेदांबुसेकोद्धता भेरीझांकृतिचापटंकृतिचमत्कारोल्लसन्मानसाः । क्षुभ्यत्क्षोणितलं स्फुरत्खुरपुटं चंचच्चलत्केसरं मंदभ्रांतविलोचनं प्रतिदिशं नृत्यंति वाजिव्रजाः ॥ अत्र जलसेकेन वाजिनामौद्धत्यं स्वभाव एव नर्तनकाले चलत्केसरादिकमपि स्वभावः स चात्र वर्णित इति भवति स्वभावोक्तिरलंकार इति काव्यविलासे ।

येषां तैश्च कुरंगैर्मृगैः उदीक्षितं चंचलतया अधिकं विलोकितम्। नपुंसके भावे क्तः। मृगजातिस्थः स्वभावोऽयं तदवलोकनक्रियास्वभावो वा आदिशब्दाद्वयोवस्थाविकारादिस्वभावा उन्नेयाः। प्राचां मते तु जातेरेव स्वभावोक्तिः। अत एव स्वभावोक्तिरसौ जातिरिति वाग्भट्टेनास्या जातिरिति नामांतरमुक्तम्

भाविकं भूतभाव्यर्थसाक्षात्कारस्य वर्णनम् ॥

अहं विलोकयेऽद्यापि युध्यंतेऽत्र सुरासुराः ॥ १६१ ॥

॥ १६० ॥ भाविकमिति ॥ भूतभाव्यर्थसाक्षात्कारस्य भूतभाविनोरर्थयोः क्वचिद्भूतस्य क्वचिद्भाविनोऽर्थस्य यः साक्षात्कारोऽनुभवस्तस्य वर्णनं भाविकम्। भावाय साक्षात्काराय प्रभवतीति भाविकमिति व्युत्पत्तेः। उदाहरणम्। अत्र सुरासुराः सुरासुरविरोधस्य राज्यहेतुकत्वादाखुबिडा[illegible]दिवत् स्वाभाविकत्वा-

भावादेकवद्भावो न। युध्यंते इत्यहमद्यापि विलोकये पश्यामि। भूतार्थसाक्षात्कारोऽयम्। एवं भाविनोऽप्युदाहरणमूह्यम्॥ १६१॥ उदात्तमिति॥ ऋद्धिः संपत्तिः श्लाघ्यं स्तुत्यं चरितमवदातं च। अवदातं महत् कर्म इत्यमरः॥ अन्योपलक्षणं अन्यस्य उपलक्षणं श्लाघ्यताबोधकं सत् उदात्तम्। उत्कर्षेणादीयते गृह्यतेस्मेत्यु-

> उदात्तमृद्धिश्चरितं श्लाघ्यं चान्योपलक्षणम् ॥
> सानौ यस्याभवद्युद्धं तद्धूर्जटिकिरीटिनोः ॥ १६२ ॥

दात्तम्। भावे कर्मणि क्तः। श्लाघ्यशब्दस्य ऋद्धिविशेषणत्वे लिंगविपरिणामो बोध्यः। उदाहरणम्। यस्य हिमाद्रेः सानौ शिखरे तत्प्रसिद्धं धूर्जटिकिरीटिनोः धुरि अग्रे जटा यस्य धूर्जटिः शिवः। पृषोदरादित्वात्साधुः। स च प्रशस्तं किरीटमिंद्रदत्तमस्यास्तीति किरीटी धनंजयः स च तयोर्युद्धमभूत्। अत्र श्लाघ्यच-

ृरितं हिमाचलश्लाघ्यताबोधकमिति विलोमक्रमेणोदाहरणम् ॥ १६२ ॥ ऋद्धिर्य-
था ॥ रत्नस्तंभेष्विति ॥ रत्नस्तंभेषु रत्नमयस्तंभेषु संक्रांतैः प्रविष्टैः प्रतिबिं-
बानां शतैः समूहैः । बहुभिः प्रतिबिंबैरित्यर्थः । संख्यानुपयोगाच्छब्दस्य बहुत्वे
पर्यवसानम् । उक्तं च वेदनिघंटौ ॥ शतं सहस्रमिति बहोरिति । वृतः परिवा-

रत्नस्तंभेषु संक्रांतैः प्रतिबिंबशतैर्वृतः ॥
ज्ञातो लंकेश्वरः कृच्छ्रादांजनेयेन तत्त्वतः ॥ १६३ ॥
अत्युक्तिरद्भुतातथ्यशौर्यौदार्यादिवर्णनम् ॥

ृरितो लंकेश्वरो रावणः आंजनेयेन अंजनाया अपत्येन हनुमता तत्त्वतः परमा-
र्थतः कृच्छ्रात् ज्ञातः । ल्यब्लोपे पंचमी । कृच्छ्रं प्राप्य ज्ञातं इत्यर्थः । अत्र श्लाघ्या
संपत्तिः पौलस्त्यस्य महत्त्वं सूचयति । अत्र संबंधातिशयोक्तिरप्यस्तीत्याह
॥ १६३ ॥ [illegible]रिति ॥ अद्भुतं आश्चर्यभूतं अतथ्यं मिथ्याभूतं यच्छौर्यौ-

दार्यादिवर्णनं तदत्युक्तिः। उदाह०। हे राजेंद्र त्वयि दातरि सति याचकाः कल्पशाखिनो भवंति । अत्र राज्ञः कल्पशाखितुल्यत्वेनाश्चर्यं याचकानां तु तथात्वे चित्रमेवेत्यत्युक्तिः। संबंधातिशयोक्तेरतथ्यत्वमात्रं विशेषः। अतथ्यस्याप्यभिधानमद्भुतत्वेन चमत्कारकारि। केचित्तु कल्पशाखिनोऽपि याचका भवंतीत्यन्वयं मन्यंते। कल्पद्रुमाणामपि याचकत्वे कैमुतिकन्यायेन सर्वेषां याचकत्वमर्थसिद्ध-

त्वयि दातरि राजेंद्र याचकाः कल्पशाखिनः ॥ १६४ ॥
निरुक्तिर्योगतो नाम्नामन्यार्थत्वप्रकल्पनम् ॥

मिति दानात्युक्तिः ॥ १६४ ॥ निरुक्तिरिति ॥ नाम्नामभिधानानां योगतो व्युत्पत्त्या अन्यार्थत्वप्रकल्पनं भिन्नार्थपरतया योजनं निरुक्तिः। निश्चित्योक्तिः निरुक्तिरिति व्युत्पत्तेः। उदाहरणम्। हे चंद्र ईदृशैर्विरहिदुःखसहैश्चरितैः भवान् दोषाकर इति सत्यं जाने। अत्र दोषेति सत्रिवाचकमव्ययम्। दोषां करोतीति

दोषाकर इति प्रसिद्धोऽर्थः। दोषाणामाकर इति तु तद्भिन्नः कल्पितोऽर्थ इति लक्षणानुगमः ॥ १६५ ॥ प्रातिषेध इति ॥ प्रसिद्धस्य अनुक्तसिद्धस्य निषेधस्यानुकीर्तनं प्रतिषेधः। स्पष्टम्। उदाहरणम्। हे कितव हे द्यूतकार हे शकुने एतद्द्यूतं न। किं तु निशितैः शरैः क्रीडनं खेलनम्। अत्र युद्धस्य द्यूतत्वाभाव उक्तिं

ईदृशैश्चरितैर्जाने सत्यं दोषाकरो भवान् ॥ १६५ ॥
प्रतिषेधः प्रसिद्धस्य निषेधस्यानुकीर्तनम् ॥
न द्यूतमेतत्कितव क्रीडनं निशितैः शरैः ॥ १६६ ॥
सिद्धस्यैव विधानं यत्तदाहुर्विध्यलंकृतिम् ॥

विनापि प्रसिद्धः तस्य पुनर्निषेधेन तव द्यूतमात्रे कौशल्यमस्ति न तु युद्धे इति ध्वनयति ॥१६६॥ सिद्धस्येति ॥ यत् सिद्धस्य उक्तिं विनापि ज्ञातस्यैव विधानं ज्ञापनं तत् विध्यलंकृतिं विधिसंज्ञामलंकृतिमाहुः। प्रकरणगम्यत्वेऽप्यलंकृतिश-

ब्दादग्निहोत्रं जुहोतीत्यादावपूर्वविधेर्नालंकारत्वम्। उदाहरणम्। पंचमोदंचने पंचमस्वरप्रकटने काले वसंतरूपे कोकिलः पिकः कोकिलो मनोहरो भवेत्। अत्र स्वतःसिद्धस्यैव कोकिलत्वस्य वसंते पुनर्विधानं मनोहरत्वबोधनाय १६७ हेतोरिति ॥ हेतोः कारकस्य ज्ञापकस्य वा हेतुमता हेतुसाध्येन सहैकस्मिन्वाक्ये वर्णनं हेतुर्नामालंकार उच्यते। कारणवाचको हेतुशब्दोऽलंकारे लाक्ष-

पंचमोदंचने काले कोकिलः कोकिलो भवेत् ॥ १६७ ॥
हेतोर्हेतुमता सार्धं वर्णनं हेतुरुच्यते ॥

णिकः तद्वर्णनप्रधानत्वात्। उदाहरणम्। असौ शीतांशुश्चंद्रः सुभ्रुवां सुंदरीणां सुष्ठु भ्रुवो यासामिति भ्रूमात्रप्रशंसनेऽपि लक्षणया सर्वांगप्रशंसा बोध्या। मानच्छेदाय मानच्छेदं कर्तुमेवेत्यर्थः। तुमर्थाच्च भाववचनादिति चतुर्थी। उदेति। अत्र चंद्रोदयो हेतुः मानच्छेदश्च हेतुमान् तयोरेकवाक्ये निवेशनं फलांतरनिषे-

धार्थम् । न चात्र लुप्तोत्प्रेक्षा शंक्या एवकाराध्याहारात् । नं चायं काव्यलिंगेंऽत-र्भवति समर्थ्यसमर्थकभावाभावात् । कारकहेतोरिदमुदाहरणं ज्ञापकहेतोस्तु कुमुदानि विकसंति । कामिनीः सज्जयितुमित्यर्थः ॥ १६८ ॥ हेत्विति ॥ हेतुहे-तुमतोः साधनसाध्ययोरैक्यमभेदं केचिदालंकारिकाः हेतुं हेत्वलंकारं प्रचक्षते प्राहुः । उदाहरणम् । वेंकटप्रभोः करिगिरीश्वरस्य कटाक्षाः कृपापांगावलोकाः

असावुदेति शीतांशुर्मानच्छेदाय सुभ्रुवाम् ॥ १६८ ॥
हेतुहेतुमतोरैक्यं हेतुं केचित्प्रचक्षते ॥

विदुषां पंडितानां लक्ष्मीविलासाः संपत्प्रसारा एव । अत्र कटाक्षाणां हेतूनां विलासानां हेतुमतां चाभिन्ननिर्देशेन लक्षणसंगतिः अभेदोक्तिश्च कार्यशैघ्र्यप्र-त्यायनाय । न चायं रूपकेंऽतर्भवति ततोऽपि किंच्छित्तिविशेषसद्भावात् । नाप्य-तिशयोक्तौ तद्भेदेभ्यो वैलक्षण्यसंभवात् । नापि परिणामे क्रियाया अतिबंधना-

दित्यलमतिविस्तरेण ॥१६९॥ इत्थमिति ॥ प्रकर्षेण कालाधिक्येनांचंति गच्छंतिस्मेति प्रांचः। पूर्वकालवर्तिनस्तेषां पुरातनानामित्यर्थः। आधुनिकानां अधुना भवानां पंडितानां च सर्वशः सर्वाणि मतान्यालोच्य शतं शतसंख्याका अलंकाराः इत्थमनेन प्रकारेण लक्षयित्वा निरूप्य निदर्शिता उदाहृतां इत्यर्थः।

लक्ष्मीविलासा विदुषां कटाक्षा वेंकटप्रभोः ॥ १६९ ॥
इत्थं शतमलंकारा लक्षयित्वा निदर्शिताः ॥

नन्वेतावतः प्रयत्नस्य फलमनुद्दिश्य प्रवर्तितः.कथं घटते इति चेत्सत्यम्। एकः शब्दः सम्यक् ज्ञातः सुप्रयुक्तः स्वर्गेलोके कामधुग्भवतीति भाष्यकारोक्तं शब्दप्रयोगस्य पारलौकिकं फलमस्त्येव। किं च काव्यं यशसेऽर्थकृते इत्यादि प्रामाणिकपंडितोक्तं राजप्रसादादिकमैहिकमपीति। एवं श्रूयते। अप्पय्यदीक्षितो

नाम द्राविडः पंडितो रंगराजसूनुः स पितुराज्ञया वेंकटाद्रिराजमुपजगाम । स च राज्ञाभ्यर्थितश्चंद्रालोकं नाम ग्रंथं चकार । राज्ञा वर्षासदनं दत्वा प्रहितोऽलंकारविवेचनाय प्रार्थितश्चेमाः कारिकाः कुवलयानंदं च कृत्वा वेंकटेशं प्रसादयामासेति । धरणीधरगुरुचरणशरणीकरणात्कुवलयानंदे । स्फूर्तिर्मम सानुबंधा

प्राचामाधुनिकानां च मतान्यालोच्य सर्वशः ॥ १७० ॥

चत्वारो रसवत् प्रेय ऊर्जस्वी च समाहितम् ॥

भावस्य चोदयः संधिः शबलत्वमिति त्रयः ॥ १७१ ॥

इति सूचयितुं प्रयत्नोऽयम् ॥१७०॥ अथोद्देशमात्रेणावशिष्टान् पंचदशालंकारानाह । यद्यपि तेषां लक्ष्यलक्षणयोरपि वचनार्हत्वमस्ति तथापि शास्त्रांतरसाकांक्षत्वेन बालैर्दुर्ग्रहत्वादुद्देशमात्रेणाभिधानं युक्तम् । तथाहि ॥ चत्वार इति ॥

एवं क्रमादन्यानपि पंचदशालंकारान् बुधाः विदुः। लक्षणया कथयंतीत्यर्थः। ते च रसवत् प्रेय ऊर्जस्वी समाहितमिति चत्वारः। किं च भावस्य उदयः भावयोः संधिः भावानां शबलत्वं चेति त्रयः प्रत्यक्षप्रमुखाः प्रत्यक्षादयः ॥१७१॥ अष्टौ

अष्टौ प्रमाणालंकाराः प्रत्यक्षप्रमुखाः क्रमात् ॥
एवं पंचदशाप्यन्यानलंकारान्विदुर्बुधाः ॥ १७२ ॥

इतिश्रीमदद्वैतमतप्रतिष्ठापनधुरीणरंगराजाध्वरींद्रसूनोरप्पय्यदीक्षितस्य कृतौ कुवलयानंदे मूलकारिकाः समाप्ताः ॥

प्रमाणालंकाराः प्रमाणान्येवालंकारा इति ॥१७२॥ इति श्रीपदवाक्यप्रमाणपारावारीणरामजीभट्टात्मजाशाधरभट्टविरचितायां कुवलयानंदकारिकाव्याख्यायामलंकारदीपिकासमाख्यायां प्रथमं लक्ष्यलक्षणप्रकरणं समाप्तम् ॥

श्रीहरये नमः ॥ एतेषामिति ॥ स्पष्टार्थः ॥१॥ अन्येति ॥ रसस्य शृंगारादेः अन्यांगत्वेऽन्यस्य सजातीयस्य विजातीयस्य वा अंगत्वे उपकारकत्वे सति रसवत् रसोऽस्मिन्नस्तीति रसवत् नाम स्यात्। सामान्ये नपुंसकत्वम्। तद्यथा। यथाशब्दो निदर्शने। उदाहरणम्। अहो इत्याश्चर्ये। देव्या वशीकृतः शंभुः

एतेषां लक्षणं वक्ष्ये संक्षेपाल्लक्ष्यसंयुतम् ॥
बालानामुपकाराय संसृष्टेः संकरस्य च ॥ १ ॥
अन्यांगत्वे रसस्य स्याद्रसवन्नाम तद्यथा ॥

स्यूतशरीरार्धः स्पर्शसुखलोभात् संश्लिष्टशरीरार्धो जातः। शंभोरप्येवं काममोहे तदन्येषां का गतिरित्याश्चर्यम्। अत्राद्भुतरसो मुख्यः शृंगारस्तु तस्यांगमिति रसवदलंकारः। रसस्वरूपमुक्तं काव्यप्रकाशे। कारणान्यथ कार्याणि सहकारीणि यानि च। रत्यादिस्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥१॥ विभावा अनु-

भावाश्च कथं ते व्यभिचारिणः। व्यक्तः स तैर्विभावाद्यैः स्थायिभावो रसः स्मृतः ॥२॥ स्थायिभावश्च नवविधः। स यथा रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा। जुगुप्साविस्मयशमाः स्थायिभावाः प्रकीर्तिता इति ॥ ३ ॥ स्थायिभावश्च रसत्वं प्राप्य नवविधो भवति। स यथा। शृंगारहास्यकरुणरौद्रवीरभयानकाः। बीभत्साद्भुतशांताख्या नव नाट्ये रसाः स्मृता इति ॥४॥ एषां लक्षणादिविस्तरस्तु रसविलासे द्रष्टव्यः ॥ २ ॥

अहो स्यूतशरीरार्धः शंभुर्देव्या वशीकृतः ॥ २ ॥

भावस्य चापरांगत्वे प्रेयोऽलंकार ईरितः ॥

भावस्येति ॥ भावस्य वक्ष्यमाणस्वरूपस्य अपरांगत्वे सजातीयस्यं विजातीयस्य वोपसर्जनत्वे प्रेयोऽलंकारः। अतिशयेन प्रियमिति प्रेय इति व्युत्पत्तेः। ईरितः उक्तः। उदाहरणम्। इदं मम तारुण्यं यौवनं धिक्। धिग्योगे द्वितीया। यत्र यस्मिन् प्रिया कांता दैवेन दुर-

दृष्टेन दूरिता दूरीकृता । अत्र निर्वेदाख्यो भावो विप्रलंभशृंगारस्यांगमिति प्रेयोऽलंकारः । भावस्वरूपमुक्तं काव्यप्रकाशे । रतिर्देवादिविषया व्यभिचारितयांजितः । भावः प्रोक्तस्तदाभासास्त्वनौचित्यप्रवर्तिताः इति ॥ १ ॥ व्यभिचारी च त्रयस्त्रिंशद्भेदः । स यथा । निर्वेदग्लानिशंकाख्यास्तथासूयामदश्रमाः । आलस्यं चैव दैन्यं च चिंता मोहः स्मृतिर्धृतिः ॥ व्रीडा चपलता हर्ष आवेगो जडता तथा ।

धिक् तारुण्यमिदं यत्र प्रिया दैवेन दूरिता ॥३॥

आभासस्यांगता यत्र तत्रोर्जस्वि मतं बुधैः ॥

गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥ स्वप्नो विबोधोऽमर्षश्चाप्यवहित्थमथोग्रता । मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥ त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ॥ त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामत इति । विस्तरस्तु काव्यप्रदीपे रसविलासे च द्रष्टव्यः ॥ ३ ॥ आभासस्येति ॥ आभा-

सस्य भावाभासस्य रसाभासस्य वा यत्रांगता गौणा सा भवति बुधैस्तत्रोर्जस्वि मतम् । ऊर्जः शोभा पाटवमस्यास्तीत्यूर्जस्वीति निरुक्तिः ॥ उदाहरणम् । परदारस्तनस्पर्शी कश्चन कामुकः कंपितः संजातकंपः सन् दिशः पश्यति । कश्चिन्मां पश्येदिति भयादिति भावः । अत्र शृंगाराभासो भयानकरसस्यांगं

परदारस्तनस्पर्शी दिशः पश्यति कंपितः ॥ ४ ॥
समाहितं तद्भावस्य शांतेर्यत्र परांगता ॥
मुक्तमाना स्वयं साभूत्तर्जिता घनगर्जितैः ॥ ५ ॥

अनौचित्येन प्रवृत्तः । आभासलक्षणं तूक्तं प्राक् ॥४॥ समाहितमिति ॥ यत्र भासस्य शांतेर्विरतेः परांगता रसाद्यंगत्वं तत्समाहितं स्पष्टम् । उदाहरणम् । सा कांता घनगर्जितैस्तर्जिता भीषिता इवेति गम्योत्प्रेक्षा । सती स्वयं मुक्तमाना स्वयमेव त्यक्तामर्षा अभूत् । अमर्षकृतां वक्रतां हित्वा स्वयमेवाश्लिष्टव-

तीत्यर्थः । अत्रामर्षाख्यभावस्य शांतिः शृंगारस्यांगम् । अत्र प्रहर्षणालंकारोऽप्यस्ति ॥५॥ भावेति ॥ भावोत्पत्तेः परांगत्वे सति भावोदय इति प्रसिद्धोऽलंकारः स्मृतः बुधैर्गदित इत्यर्थः । उदाहरणम् । सा कांता प्रियं वीक्ष्य नम्रास्या लज्जयाऽधोमुखी सती ईप्सितमर्थं वक्तुं नाशकत् । अत्र व्रीडाख्यभावस्योत्पत्तिः

भावोत्पत्तेः परांगत्वे भावोदय इति स्मृतः ॥
सा प्रियं वीक्ष्य नम्रास्या नाशकद्वक्तुमीप्सितम् ॥ ६ ॥
परांगं भावयोर्योगो भावसंधिरलंकृतिः ॥
यांती वेलां प्रतीक्षंती विलंब्य प्रियमाप सा ॥ ७ ॥

शृंगारस्यांगम् । नायिका तु लज्जाप्रधानत्वान्मुग्धा ॥ ६ ॥ परांगमिति ॥ परांगं रसाद्यंगभूतो यो द्वयोर्भावयोर्योगो भावसंधिर्नामालंकृतिः स्पष्टम् ॥ उदाहरणम् । सा नायिका यांती सती वेलां प्रतीक्षंती सती च विलंब्य प्रियं

आप अत्रौत्सुक्यस्य शंकायाश्च संधिः शृंगारस्यांगम्। अत्यारूढो हि नारीणामकालज्ञो मनोभवः। इति न्यायादौत्सुक्येन यांत्यपि वेलामंतरेण केलिगृहे प्रियसमागमो न स्यादिति मत्वा विलंब्य यातेति भावः ॥ ७ ॥ तदिति ॥ चेद्यदि बहूनां भावानां परांगता स्यात्तर्हि भावशबलत्वं नामालंकारः। चित्रं किर्मीरक-

तद्भावशबलत्वं स्याद्बहूनां चेत्परांगता ॥
धिङ्मां भोगरतं संतः किं वक्ष्यंति त्यजामि तान् ॥ ८ ॥
प्रत्यक्षमिंद्रियज्ञानवर्णनं षड्विधं तु तत ॥

ल्माषशबलैताश्च कर्बुरे इत्यमरः। उदाहरणम्। भोगरतं विषयासक्तं मां धिक्। धिगिति निंदायां तद्योगे द्वितीया। निंद्योऽहमस्मीत्यर्थः। संतः किं वक्ष्यंति सदसद्वेति न वेद्मीत्यर्थः। तस्माद्दुष्टान् तान् भोगान् त्यजामि। अत्र विरक्तवाक्ये निर्वेदशंकामतीनां शांतरसस्यांगत्वम् ॥८॥ प्रत्यक्षमिति ॥ इंद्रियज्ञानवर्णनं इं-

द्रियजन्यज्ञानस्य वर्णनं प्रत्यक्षम् । अक्ष्णः समीपे प्रत्यक्षमिति सामीप्यार्थेऽव्ययीभावः । अक्षाणां समीपे इति वा । तच्च षड्विधम् । श्रौत्रत्वाचचाक्षुषरासनघ्राणजमानसभेदात् । उदाहरणम् । जनः यां पचनकाले शब्दायमानां श्रौत्रेण श्रुत्वा ततः त्वचा स्पृष्ट्वा चक्षुषा दृष्ट्वा रसनेन रसित्वा नासया चाघ्राय मनसा मोदते

श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च रसित्वाघ्राय यां जनः ॥
मोदते घृतपक्वां तां शष्कुलीमर्पयामि ते ॥ ९ ॥
प्रतीतिर्लिंगिनो लिंगादनुमानमदूषितात् ॥

सुखितोऽस्मीति वेत्ति । हे देव घृतपक्वां तां शष्कुलीं प्रसिद्धां ते तुभ्यं अर्पयामि । अनुक्रमेण षड्विधस्यापींद्रियज्ञानस्य वर्णनमिति प्रत्यक्षालंकारः ॥ षट्पदी गाथेयम् ॥ ९ ॥ प्रतीतिरिति ॥ अदूषितात् व्यभिचारादिदोषरहितात् लिंगादसाधारणचिह्नात् लिंगिनो लिंगवतोऽर्थस्य प्रतीतिरनुमानं स्पष्टम् । उदाहरणम् ।

हे सखे ते तव हृदि कामाग्निरस्तीति सोष्मणो घर्मसहितान्निःश्वासाद्धेतोर्ज्ञा-
तम्। अत्र कामाग्निलिंगिनः सबाष्पनिःश्वासरूपलिंगात् प्रतीतिरुक्तेत्यनुमा-
नम्। न चात्र लिंगं दोषवदिति शंक्यम्। विलक्षणस्य लिंगिनो विलक्षणलिंगौ-
चित्यात्। यथा तप्ततोयस्थवह्नेरुष्मण इति दिक् । एतत्प्रपंचस्तु न्यायशास्त्रे

निःश्वासात्सोष्मणो ज्ञातं हृदि कामाग्निरस्ति ते ॥ १० ॥
सादृश्याद्वस्तुनो भानमुपमानं प्रकीर्तितम् ॥
हिंगुलं पद्मरागाभं तद्वर्णा हिंगुलांबिका ॥ ११ ॥

द्रष्टव्यः ॥१०॥ सादृश्यादिति ॥ सादृश्याद्वर्ण्यमानाद्वस्तुनः प्रकृतस्य इदमेव
तन्नामकमिति भानं प्रतीतिरुपमानं प्रकीर्तितं स्पष्टम्। उदाहरणम्। पद्मरागाभं
पद्मस्य कोकनदस्य राग इव रागो यस्येति पद्मरागो माणिक्यं तस्याभा इव
आभा यस्येति तथोक्तं रंजनं द्रव्यं हिंगुलसंज्ञं तद्वर्णा तत्तुल्यरागा अंबिका देवी

हिंगुलेव्युक्ता। अत्रोपमानत्रयसद्भावात्संसृष्टिः। हिंगुलवर्णधृतिकारणं पद्मपुराणस्थे आकाशखंडे द्रष्टव्यम् ॥ ११ ॥ श्रुत्यादीति ॥ श्रुत्यादिवाक्यविन्यासाद्वेदादिवचनोपन्यासान्निश्चयः शब्दः शब्दाख्यप्रमाणमुच्यते स्पष्टम्। उदाहरणम्। सांबशंभुः अंबया सहितः शिव एव कैवल्योपनिषच्छ्रुतेः तद्वाक्यश्र-

श्रुत्यादिवाक्यविन्यासान्निश्चयः शब्द उच्यते ॥
सांबशंभुः परं ब्रह्म कैवल्योपनिषच्छ्रुतेः ॥ १२ ॥
ऐतिह्यं किंवदंती चेत्प्रमाणत्वेन भण्यते ॥

वणात्परं निर्गुणं ब्रह्मेति जानामि ॥ १२ ॥ ऐतित्ह्यमिति ॥ चेद्यदि· किंवदंती जनवार्ता। किंवदंती जनश्रुतिरित्यमरः। प्रमाणत्वेन भण्यते तर्हि ऐतिह्यं इतिह प्रसिद्धं एव ऐतिह्यमिति व्युत्पत्तेः ॥ उदाहरणम्। इदं पूर्ववर्ति शिवस्य लिंगं तिलमात्रं वर्षवर्धं वर्षे वर्धते तथाभूतं जनाः विदुः कथयंतीत्यर्थः। अत्र शिवलिंगस्य

वर्षे वर्षे तिलमात्रवृद्धौ जनवार्ता प्रमाणमिति ऐतिह्यम् ॥१३॥ कल्पनमिति ॥ अन्यथा सिद्ध्या प्रकारांतरेण सिद्ध्या अर्थस्य कल्पनमर्थापत्तिः इष्यते। उदाहरणम्। पतिव्रता साक्षात् गंगा अन्यथाग्निं कथं विशेत्। गंगात्वे तु वह्निप्रवेशो

तिलमात्रमिदं लिंगं वर्षवर्धं विदुर्जनाः ॥ १३ ॥
कल्पनं चान्यथा सिद्ध्यार्थस्यार्थापत्तिरिष्यते ॥
गंगा पतिव्रता साक्षादन्यथाग्निं विशेत्कथम् ॥ १४ ॥
प्रमाणत्वेन निर्दिष्टानुपलब्धिरलंक्रिया ॥

न दुर्घट इति भावः ॥१४॥ प्रमाणत्वेनेति ॥ प्रमाणत्वेन प्रमाणकरणत्वेन निर्दिष्टा निदर्शिता अनुपलब्धिरप्राप्तिरत्यंताभाव इति यावत्। अलंक्रियालंकारो भवति। उदाहरणम्। हे राजंस्तवाऽयशो नास्तीति लोकवचः सत्यं यथार्थमेव।

यद्यस्मात्क्वचिदपि न श्रुतमस्माभिरिति शेषः। अस्ति चेदयशः श्रूयते इति भावः। अत्रायशसोऽभावं प्रति श्रवणाभावः प्रमाणत्वेन दर्शित इत्यनुपलब्धिः। अभावाख्यमेतत्प्रमाणमभावग्राहकमिति वेदांतिनः ॥ १५ ॥ **संभव इति** ॥ यः संभवः प्रमाणत्वं प्रकृतार्थनिर्णायकत्वं प्रयाति स संभवो नामालंकारः स्यात्।

अयशस्तव नास्तीति सत्यं यन्न श्रुतं क्वचित् ॥ १५ ॥
संभवः स्यादलंकारः प्रमाणत्वं प्रयाति यः ॥
स्यान्मे कदाचिदिंद्रत्वं चित्रा कर्मगतिर्यतः ॥ १६ ॥

उदाहरणम्। मे मम कदाचिदिंद्रत्वं स्यात् भवेत्। संभावनायां लिङ्। यतः कर्मगतिः कर्मफलप्राप्तिः चित्रा नानाविधा। ततः कस्यचित्कर्मणः फलमिंद्रत्वमपि भवत्येवेति भावः। अत्र चत्वारि प्रमाणानि। काणादादीनां षट् वेदांतिनां अष्टौ

मीमांसकानामालंकारिकाणां चेति प्रसिद्धः पंथाः ॥१६।१७॥ प्रकृतार्थस्येति ॥ यत्र प्रकृतार्थस्य शब्देन प्रमाणभूतेन निर्वाहः समर्थनं सा श्रुतिः। उदाहरणम्। हे देव त्वं तुष्टः सन् भक्तानां मृत्युं हरसि मोक्षं ददासीत्यर्थः। अत्र प्रमाणं द-

श्रुतिलिंगादयः शब्दाः प्रपंच्यंतेऽपि दर्शिताः ॥
भेदाः कुवलयानंदे संक्षेपात्तानपि ब्रुवे ॥ १७ ॥
प्रकृतार्थस्य शब्देन निर्वाहो यत्र सा श्रुतिः ॥
मृत्युं हरसि भक्तानां तुष्टो मृत्युंजयोऽसि यत् ॥ १८ ॥
तल्लिंगं नाम यत्र स्याद्वर्ण्यचिह्ने प्रमाणता ॥

र्शयंति। यद्यस्मान्मृत्युंजयोऽसि प्रमाणभूतमृत्युंजयशब्दवाच्योऽसीत्यर्थः। मृत्युहरणसामर्थ्यं विना मृत्युंजयशब्दवाच्यत्वं न स्यादिति प्रकृतार्थसमर्थनम् ॥ १८ ॥ तदिति ॥ यत्र वर्ण्यचिह्ने वर्ण्यस्य शिवादेः चिह्ने त्रिनेत्रत्वादौ प्रमा-

णता प्रमाणत्वेन प्रकृतोपयोगित्वं स्यात् तल्लिंगं नामालंकारः स्यात् । उदाहरणम् । शंकरः त्रिलोक्याः साक्षी । साक्षाद्द्रष्टरि संज्ञायामिति निपातनात्साधुः । त्रिभिर्नेत्रैः प्रतीयते ज्ञायते त्रिलोकी । नित्यसाक्षात्कारार्थमेव त्रिलोचनत्वमिति भावः । अत्र लिंगशब्दस्य चिह्नपरत्वात् अनुमानालंकारे नातिव्याप्तिः । वाक्य-

त्रिलोक्याः शंकरः साक्षी त्रिभिर्नेत्रैः प्रतीयते ॥ १९ ॥
प्रकृतार्थोपयोगित्वं यत्राचारस्य तत्र सः ॥
गोपस्यापि दधि ग्राह्यं काश्यां भक्षंति सूरयः ॥ २० ॥

प्रमाणं तु दिङ्मात्रमुदाहृतं तस्य चान्येऽपि श्रौतस्मार्तपौराणिकत्वादयो भेदाः स्वयमूह्याः । प्रकरणस्थानसमाख्यानां त्रयाणां मीमांसकोक्तप्रमाणानामलंकारत्वं नास्ति । कुवलयानंदेऽनुदाहृतत्वात् ॥ १९ ॥ प्रकृतेति ॥ यत्राचारस्य शिष्टाचारस्य प्रकृतोपयोगित्वं वर्ण्यसमर्थकत्वं तत्र स आचारो नामालंकारः । उदा-

हरणम् । गोपस्य नीचजातेरपि दधि काश्यां ग्राह्यमेवान्यत्र तु नेत्यर्थः । यत-
स्तत्र सूरयः पंडिता अपि तद्भक्षंति । तस्माद्यद्यदाचरति श्रेष्ठ इति न्यायेन सर्वे
षामपि तद्भक्षणे दोषो नास्तीति भावः । अयं च देशग्रामकुलाचारादिभेदादने-
कविधः ॥ २० ॥ आत्मेति ॥ तत्रात्मतुष्टिनामप्रमाणालंकारः । यत्र तयात्म-

आत्मतुष्टिरलंकारो यत्र स्यान्निर्णयस्तया ॥
अष्टमे मासि सीमंतो युक्तो मह्यं हि रोचते ॥ २१ ॥

॥ इत्याशाधरभट्टकृतमुद्दिष्टनामकं द्वितीयं प्रकरणं समाप्तम् ॥

तुष्ट्या निर्णयो निश्चयः स्यात् । उदाहरणम् । अष्टमे मासि सीमंतोन्नयनाख्यं
कर्म न तु षष्ठे मासीत्यर्थः । तत्र प्रमाणं दर्शयति । हि यस्मान्मह्यं रोचते । रु-
च्यर्थानां प्रीयमाण इति संप्रदानत्वाच्चतुर्थी । अत्र पंडितानामेवात्मतुष्टिः प्रमाणं

न तु सर्वेषाम् । तथाहि । षष्ठेऽष्टमे वा सीमंत इति याज्ञवल्क्यस्मृतौ विकल्पे सत्यपि तदुत्तरं नियमानां सुकरत्वात् द्वितीयः पक्षो युक्तः श्लाघ्य इति । प्रथमपक्षस्वीकारे तु नियमा दुर्घटा इति । एवं गर्भाष्टमेऽष्टमेवाब्देब्राह्मणस्योपनायनमित्यादावपि ज्ञेयम् ॥२१॥ एते प्रमाणालंकाराः प्रकृतार्थसमर्थनात् । काव्यलिंगप्रपंचत्वमुपयांत्येव वस्तुतः ॥ १ ॥ धरणीधरपादाब्जप्रसादासादितस्मृतेः । आशाधरस्य वागेषा तनोतु विदुषां मुदम् ॥२॥ ॥ इति श्रीपदवाक्यप्रमाणपारावारीणरामजीभट्टात्मजाशाधरभट्टकृतौ कुवलयानंदकारिकाव्याख्यायामलंकारदीपिकासमाख्यायां उद्दिष्टालंकारनामकं द्वितीयंप्रकरणं समाप्तम् ॥ २ ॥



अथेति ॥ स्पष्टम् ॥ १ ॥ संसृष्टिरिति ॥ एतेषामलंकाराणां तिलतंडुलवत् तिलतंडुलयोरिव । तत्र तस्येवेति वतिप्रत्ययः । तंडुलशब्दस्य । वृकणितनिताडिभ्यश्च उलच् तंडश्चेत्युणादिसूत्रेण सिद्धो डुकारमध्य इत्याहुः ॥ या मिश्रिता

अथ मुक्ताप्रवालादिमिश्रहारादिसन्निभान् ॥
अनुक्तान्पंच संक्षेपात् संसृष्ट्यादीन् ब्रवीम्यहम् ॥ १ ॥
संसृष्टिर्मिश्रतैतेषां तिलतंडुलवत्तु या ॥
लिंपतीव तमोऽङ्गानि वर्षतीवांजनं नभः ॥ २ ॥
उत्थाप्योत्थापकत्वे स्यादंगांगीभावसंकरः ॥

सा संसृष्टिः । तिलतंडुलदृष्टांतेन परस्परनिरपेक्षत्वं चोक्तम् । उदाहरणम् । लिंपतीवेत्यादि । अत्रोत्प्रेक्षाद्वयं परस्परनिरपेक्षम् स्पष्टम् ॥ २ ॥ उत्थाप्येति ॥ उत्थाप्योत्थापकत्वे उपकार्योपकारकभावे साकांक्षत्वे सतीत्यर्थः । अंगांगीभा-

वर्संकरः। अंगं उत्थापकं करचरणादिवत्।।अंगी तूत्थाप्यः। च्विप्रत्ययाभावे तु अंगांगिनोर्भाव इति षष्ठीसमासः। तत्र दीर्घाभावेन छंदोभंगभयात् च्विप्रत्ययांतपक्षः साधुः। तयोर्भावशब्दे परे च्विप्रत्ययांतत्वं बोध्यम्। स चासौ संकरश्चेति कर्मधारयः। उदाहरणम्। शंखादित्यादि। अत्र रूपकातिशयोक्तिरुत्थाप-

शंखाद्वीणानिनादोऽयमुदेति महदद्भुतम् ॥ ३ ॥
द्वयोरपि प्रधानत्वे समप्राधान्यसंकरः ॥
रत्नस्तंभेषु संक्रांतप्रतिबिंबशतैर्वृतः ॥ ४ ॥

कत्वं विभावनायाश्चोत्थाप्यत्वमिति परस्परसाकांक्षकम् ॥३॥ द्वयोरिति ॥ द्वयोरप्यलंकारयोः प्रधानत्वे परस्परोपकारकत्वेन तुल्यत्वे समप्राधान्यसंकरो भवति। अंगांगीभावव्यत्ययादिति भावः। उदाहरणम्। रत्नस्तंभेष्वित्यादिना। अत्रोदात्तस्यातिशयोक्तेरंगत्वं तस्याश्चोदात्तालंकारस्येति समप्राधान्यम् ॥४॥

द्वयोरिति ॥ द्वयोरलंकारयोर्मध्ये अन्यतरस्य कस्यचिद्भेदकः नास्ति भेदकं यस्मिन्सः तथोक्तः संदेहसंकरः स्यात्। उदाहरणम्। चतुर्णामिति। अत्र चतुर्भुजस्य देवविशेषणत्वे परिकरालंकारः। सामान्यविशेषभावसंबंधेनोभयोरपि भेदाद्विशेषत्वविवक्षायां तु दातेति विशेषणान्वयानुरोधात्परिकरांकुर इति भेद-

द्वयोरन्यतरस्याभेदकः संदेहसंकरः ॥
चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः ॥ ५ ॥
एकवाचकानुप्रवेशे संकरः स्यात्तथाविधः ॥

काभावाद्द्वयोरेकतरस्यानिश्चयः। आत्मतुष्टिप्रामाण्येन परिकरोदाहरणं कृतमिति बोध्यम् ॥५॥ एकेति ॥ द्वयोरलंकारयोरेकवाचकानुप्रवेशे सामानाधिकण्येनावस्थाने तथाविधवाचकानुप्रवेशनामालंकारः। एकशब्दानुप्रवेश इति पाठांतरकल्पनेनाक्षराधिक्यं परिहरणीयम्। उदाहरणम्। तदिति। अत्रैकस्मिन् का-

कतालीये शब्दे उपमाद्वयं प्रविष्टं संसृष्टेस्त्वेकवाक्यसमानाधिकरणेऽप्येकशब्द-
मात्रसामानाधिकरण्यं नास्ति ततो विशेषः ॥ ६ ॥ एषामिति ॥ एषां संसृ-
ष्ट्यादीनां परस्परं योगे सामानाधिकरण्ये सति विचित्रो विचित्रनामा नाना-
विधत्वात्संकरो भवेत्। उदाहरणम्। गुरुरिति। अत्रोल्लेखालंकारस्य माला-

तदेतत्काकतालीयमवितर्कितसंभवम् ॥ ६ ॥
एषां परस्परं योगे विचित्रः संकरो भवेत् ॥
गुरुर्वचस्यर्जुनोऽयं कीर्तौ भीष्मः शरासने ॥ ७ ॥
एषां दोषा गतार्थत्वादर्थदोषतया पुनः ॥

रूपकेण सह समप्राधान्यसंकरः। तत्रापि श्लेषरूपकयोरंगांगीभावसंकरः। ए-
वमन्यत्रापि सुधीभिरुदाहार्यम् ॥ ७ ॥ एषामिति ॥ एषामलंकाराणां दोषाः
काव्यप्रकाशादावुदाहृताः। पुनस्तुशब्दार्थे। अर्थदोषतया अर्थाश्रयत्वेनेत्यर्थः।

गतार्थत्वात् गतप्रयोजनत्वात् । अर्थदोषाणां हि काव्यनिरूपणे वक्तुमुचित-
त्वात् अलंकारप्रकरणे तदभिधानाप्रेक्षाभावादित्यर्थः । कुवलयानंदे नोक्ताः ।
किंच । शब्दानामप्यलंक्रियाः यमकादयो नोक्ताः । तेषां केवलंमध्यमकाव्यवि-
षयत्वादिति भावः । न चालंकारेषु बालानामिति प्रतिज्ञाभंगः शंक्यः । तत्रा-

नोक्ताः कुवलयानंदे शब्दानां चाप्यलंक्रियाः ॥ ८ ॥
इति श्रीपदवाक्यप्रमाणपारावारीणरामजीभट्टात्म-
जाशाधरभट्टविरचितं तृतीयं परिशेषप्रकरणं समाप्तम् ॥ ३ ॥

लंकारशब्दस्योपमादिषु लाक्षणिकत्वात् ॥ ८ ॥ आशाधरकवेर्वाचं वाचोयु-
क्तिविशारदाः ॥ अनुगृह्णंतु बालस्य काकली कस्य नो मुदे ॥ १ ॥ काकली तु
कले सूक्ष्मे ध्वनौ च मधुराऽस्फुटे इति विश्वः ॥ इति श्रीपदवाक्यप्रमाणपारा-
वारीणरामजीभट्टात्मजाशाधरभट्टकृतायां कुवलया० तृतीयं प्रकरणं समाप्तम्॥

॥ श्रीः ॥ अथ शब्दालंकारा निरूप्यंते ॥ खड्गेति ॥ खड्गबंधादयो गतप्रत्यागतादयः पद्मबंधादयश्च श्लोकाः चित्राः चित्रालंकारा ज्ञेयाः । श्लोकचरणेषु क्रमव्युक्रमपाठाभ्यां गतप्रत्यागतः आदिशब्देन एकाक्षरद्व्यक्षरादिश्च । यथा । सानमा नवभा रामा माराभा वनमानसा ॥ धाति चारुविभामाभा भामाभाविरुचा तया ॥ १ ॥ अत्रव्युक्रमपाठेन प्रथमचरणात् द्वितीयचरणं तृतीयच-

खड्गबंधादयश्चित्रा गतप्रत्यागतादयः ॥
पद्मबंधादयश्चैव ज्ञेयाः श्लोका यथातथम् ॥ १ ॥

रणाच्चतुर्थचरणं इति गतप्रत्यागतेन चित्रालंकारः। श्लोकार्थस्तु नमतीत्येवंशीला नमा ईदृशी नभवतीत्यनमा अभिमानिनी नवभा नवदीप्तिः । मारेण कामेनाभातीति माराभा वनाय जलमाहर्तुं मानसं चित्तं यस्या इति वनमानसा । तथा चारुविभया उत्तमदीप्त्या मावल्लक्ष्मीवत् भातीति चारुविभामाभा ।

भामा सत्यभामा तस्या भावोऽभिप्रायोऽस्यामस्तीति भामाभाविनी सा चासौ रुक् चेति तया । विशिष्टा विशेषणे चात्र तृतीया । अयं भावः । यस्यां रुचि सत्यभामाया अपि भावस्तिष्ठति ममापीदृशी रुक् स्यात् तादृश्या तया विशिष्टा ईदृशी या रामा सा अति अतिक्रम्य याति गच्छति ॥ १ ॥ अनुप्रासश्चतुर्विधः । स्फुटानुप्रासो लाटानुप्रासो वृत्त्यनुप्रासश्छेकानुप्रासश्चेति । तत्राद्यः ।

पादादिषु पदावृत्त्याः स्फुटो वर्णविभेदतः ॥
योगी भोगीव संयाति पश्य त्वमुभयच्युतम् ॥ २ ॥

पादादिष्विति ॥ पादस्यादौ मध्ये अंते वा वर्णस्य पदसंबंधिनो हलः स्वरस्य वा विभेदेन भिन्नत्वेन कृत्वा पदस्यावृत्त्याः पुनः पुनर्निरूपणात् स्फुटानुप्रासालंकारः । उदाहरणम् । हे मित्र अयं योगी गृहाश्रमत्यागपूर्वं कृतयोगाभ्यासः पश्चाद्योगाच्च्युतो भोगीव भोगवान् गृहस्थ इव संयाति तमिममुभयलो-

कच्युतं त्वं पश्य। अत्र योगी भोगीति पूर्ववर्णविभेदेन पदावर्तनात्स्फुटानुप्रासः। यथा वा शिवस्तोत्रे। जनः कश्चित्कामी तव चरणगामी यदि तदा पदं ब्रह्मादीनामपि हरति दीनाह्लिलमिव। महेश त्वद्ध्यायी यदि पुनरमायी तु पुरुषस्तदा किं निर्मायं नहि पदममायं भजति सः॥ अत्र प्रतिचरणमेव कामी गामी दीना दीना ध्यायी मायी मायं मायं इति पूर्ववर्णविभेदेन पदावर्तनात् भवति स्फुटा-

लाटानुप्रासभूर्भिन्नाभिप्राया पुनरुक्तता ॥
देवेशवेशवीक्षातो दुर्वासास्तोषमाप्तवान् ॥ ३ ॥

नुप्रासालंकारः। क्वचित्पदे पूर्ववर्णविभेदः क्वचिन्मध्यवर्णविभेदः क्वचिदंत्यवर्णविभेदः अन्यत् सममिति बोध्यम् ॥२॥ अथ द्वितीयो लाटानुप्रासः॥ लाटेति॥ यदा शब्देषु पुनरुक्तता भिन्नाभिप्राया अर्थभेदे नियंत्रिता भवति तदा लाटानुप्रासः लाटानुप्रासालंकारः। उदाहरणम्। देवेश इंद्रः तस्य वेशः शोभा

पाटवं तस्य वीक्षातः वीक्षणेन दुर्वाससो मुनेस्तोषप्राप्तिर्जाता। स्वकीयं हारं च ददाविति शेषः। अत्र देवेशपदे भिन्नाभिप्रायस्यार्थस्य पुनरुक्त्या लाटानुप्रासः। यथा माधवचंपूग्रंथे। आलीभिर्नलिनीदलैः प्रतिदिशं दूरीकृतालिव्रजैर्मालाकारतया पुनःपुनरुपायातैः समासेविता। ईषद्वक्रितकंधरं प्रकटितप्रेमोत्करं प्रेयसी किंचिच्चंचलचेलकांचलचलन्नेत्रांबुजं पश्यति॥ अत्र चेलकांचलचलदि-

आवृत्तवर्णसंपूर्णं वृत्त्यनुप्रासवद्वचः॥
जगज्जगन्निवासश्चेत्पाता नाकि वनेऽवनम्॥ ४॥

त्यत्र भिन्नाभिप्रायस्यार्थभेदे नियंत्रितस्य चलचलशब्दस्य पुनरुक्त्या भवति लाटानुप्रासालंकारः॥३॥ अथ तृतीयो वृत्त्यनुप्रासः॥ आवृत्तेति॥ यत्र आवृत्तेन पुनःपुनःकथितेन वर्णेनाक्षरमात्रेण संपूर्णं व्याप्तं वचो भवति तत्र वृत्त्यनुप्रासनामालंकारः। उदाहरणम्। जगन्निवासः हरिः पाता रक्षकश्चेत्तर्हि वने

यद्वनं रक्षणं तन्निमित्तं कदाचिदपि जगत् विश्वं अकि दुःखि न स्यात् । जगन्निवास इत्यत्र विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ सागरांबरादिवत् । अकं पापे च दुःखे चेति विश्वः । अत्र जगज्जगदिति वने वने इति चैकस्वरयोरेकहलोः पुनरावृत्त्या वृत्त्यनुप्रासः । यथा । वा निःस्वेदाकुलनीलकुंतललसत्कर्णातिपालीप्रियं किंचिन्नामितकंधराविगलितं वासः कराकर्षिणी । आयातं महिलाविलांस-

सव्यंजनस्वरावृत्तौ छेकानुप्रास इष्यते ॥

निपुणं प्रासाप्रियं कामिनी किंचिल्लंघितचेलकांचलचलन्नेत्रांचलं पश्यति ॥ अत्र लकारचकारयोरेकस्वरयोः भिन्नस्वरयोर्भिन्नहलोरकारेवर्णयोरप्यनेकश आवृत्तिसत्त्वाद्भवति वृत्त्यनुप्रासनामालंकारः ॥४॥ अथ चतुर्थश्छेकानुप्रासः ॥ सव्यंजनेति ॥ सव्यंजनानां स्वराणामावृत्तौ सत्यां छेकानुप्रासालंकारः । अयं भावः । यद्धलयुक्तौ योऽभिहितः तद्धलयुक्तस्य तस्यावृत्तिरिति । अत्र तु

स्वरावृत्तिरावश्यकी व्यंजनावृत्तिरप्याद्यक्षरभिन्ना । लाटानुप्रासे तु सकलस्वरव्यंजनानामावृत्तिः शब्दपुनरुक्ततयोक्तत्वादिति भेदः । उदाहरणम् । भव्ये सुंदरे गव्ये गोसंबंधिनि मंडे मस्तुनि तद्दर्शनादेव ब्राह्मणानां रुचिर्व्यजायत । पार्थयज्ञे इति शेषः । अत्र भव्ये गव्ये इति सव्यंजनस्वरावृत्त्या छेकानुप्रासास्योऽलंकारः । यथा हृदयकल्पलतायाम् । चंचन्नीलाश्मलीलाविधिविहितम-

भव्ये गव्ये वाडवानां रुचिर्मंडे व्यजायत ॥ ५ ॥

हद्व्योमयात्रांतराले धत्ते मत्तेभकुंभस्खलनपरिलसन्मौक्तिकानीव भानि । सव्येऽसव्येऽथ हस्ते कलयति कलया व्यांजतः शीतभानोः काश्मीरीरश्मिरीत्या स्फुरति मृगमदाद्धामिनी कामिनीव ॥ अत्र नीला लीला धत्ते मत्ते काश्मीरी रश्मिरीत्यादिपदेषु सव्यंजनस्वरावृत्तित्वाद्भवति छेकानुप्रासालंकारः ॥ ५ ॥

अथ यमकालंकारः॥ सस्वरेति ॥ यदा सस्वराणां व्यंजनानामावृत्त्या कृत्वा स्तबकं वर्णसमूहो भवति तदा यमकालंकारः। अत्रायं भावः। यद्यत्स्वरयुक्तो यो यो हल्समुदायोऽभिहितस्तत्तत्स्वरयुक्तस्य भिन्नार्थस्य तत्तद्धल्समुदायस्यावृत्तिरिति। उदाहरणम्। रमणी रामा रमणीया यस्य तं लक्ष्मीकांतमित्यर्थः। समासांतः कः। तथाभूतं नारायणं देवं श्रीहरिं वंदे स्तौमि। अत्र भिन्नार्थस्य

सस्वरव्यंजनावृत्त्या स्तबकं यमकं भवेत् ॥
देवं नारायणं वंदे रमणीरमणीयकम् ॥ ६ ॥

रमणीयपदस्यावृत्त्या यमकालंकारः।यथा हृदयकल्पलतायाम्। पंचेषुपंचेषुभिराहतांगी संगीतसंगीतपरंपरांगी। पद्मेव पद्मा ललितस्वहस्ता वामाक्षि वामाक्षिपतीक्षणांतम्। अत्र भिन्नार्थानां पंचेषु पंचेष्वित्यादिपदानां मध्ये प्रतिचरणमेव सस्वरव्यंजनावृत्त्या वर्णसमूहत्वाद्भवति यमकालंकारः। अत्र बहुत्वसू-

चकं स्तवकमिति महिम्ना त्र्यक्षरप्रभृतिषु तादृगावृत्तिसत्त्वे यमकालंकारो द्व्यक्ष-
रावृत्तिसत्त्वे च लाटानुप्रास इत्येवायं भेदः ॥ ६ ॥ अथ पुनरुक्तप्रतीकाशो ना-
मालंकारः॥ पुनरिति ॥ वस्तुतः पुनरुक्तार्थकमिवापाततोऽवभासते यद्वाक्यं त-
त्पुनरुक्तप्रतीकाशो नामालंकारः। यथात्रैव केसरीति । अत्र कानने भाति वने

पुनरुक्तप्रतीकाशं पुनरुक्तार्थसन्निभम् ॥
केसरी कानने भाति वनेभातिविमर्दकः ॥
भवान् सिंहासने भाति भातिसिंहासनेभवान् ॥ ७ ॥

भाति इति शब्दयोः पुनरुक्तार्थकत्वमापाततोऽवभासते । वास्तवं तु नास्ति।
तथा हि। कीदृशः केसरी। वनेभातिविमर्दकः वनसंबंधिनामिभानां हस्तिनाम-
त्यंतं विमर्दको मर्दनकर्तेति। एवं सिंहासने भाति भाति सिंहासने इति शब्द-
योरपि पुनरुक्तार्थकत्वमापातत एवावभासते न तु वास्तवमस्ति। तथा हि। किं-

भूतो भवान् भातिसिंहासनेभवान् भांति ते भाः सिंहासनं सिंहकृतस्वकुंभोपवेशनं तदतिक्रांतं यैस्तेऽतिसिंहासनाः। भाश्च तेऽतिसिंहासनाश्चेति कर्मधारयः। सिंहैरपि ये हंतुमाक्रमितुं वा न शक्यंते एतादृशा इभा हस्तिनोऽस्य संतीति भातिसिंहासनेभवान् इति पुनरुक्तार्थसन्निभसत्त्वादिह भवति पुनरुक्तप्रतीकाशमलंकारः ॥७॥ वीक्षणाय सदसद्विवेकिनां शिक्षणाय लघुबुद्धिशालिनाम् । लक्षणैरिह विचिंतनैर्मया लक्षिता स्वकृतपद्यपद्धतिः॥१॥इति श्रीचिरंजीविभट्टाचार्यकृतकाव्यविलासे अलंकारमयी द्वितीया भंगी संपूर्णा ॥ ७ ॥ ७ ॥ ७ ॥

इदं पुस्तकं मुम्बापुर्यां निर्णयसागराख्यमुद्रणयन्त्रालये तदधिपतिना
मुद्रयित्वा प्रसिद्धिं नीतम् ॥ शकाब्दाः १८०८.

